॥ ओ३म् ॥

# ॥ मानवधर्मशास्त्रम् ॥

भीमसेनशर्म्मणा लोकोपकारमत्या सम्पादितया संस्कृतार्यभाषाद्वयोपेतमानवधर्ममीमांसाभिधव्याख्यया सुशोभितम्



श्यामलाल शर्म्मणा सरस्वतीयन्त्रालये मुद्रापयित्वा प्रकाशितम् ॥



THE

# MANAVA DHARM SHASTRA

WITH A COMMENTARY OF PANDIT BHIMSEN SHARMA

PRINTED AT

THE SARASWATI PRESS ETAWAH

Registered under Sections 18 and 19 of act XXV of 1867.

VOLL : 2

( भाग २ द्वितीय )

२२ अगस्त सन् १८९८ तथा १९५५ वि० भाद्रपद ॥

प्रथमवार १०००

मूल्यम् १॥)

# विज्ञापन ॥

कई मित्रों तथा देशहितैषियों के अनुरोध से हमने प्रथम अथर्ववेद के भाष्य करने का संकल्प कर लिया है और आवश्यकता समझेंगे तो अथर्व भाष्य छपने के पश्चात् सामवेद का भी भाष्य छपावेंगे। अथर्ववेद भाष्य का मासिक अङ्क ५ फारम ४० पेज पुष्ट रायल कागज़ में निकलेगा वार्षिक मूल्य इस का २।) मात्र डाकव्यय सहित होगा। मूल्य भेजने के लिये हम पीछेसे सूचना देवेंगे ग्राहक बननें के लिये लोग शीघ्र २ सूचना भेजें अर्थात् जिन महाशयों को अथर्ववेद भाष्य देखने की शीघ्र इच्छा हो, वे लोग ग्राहक बढ़ाने का उद्योग अवश्य करें॥

भीमसेन शर्म्मा सरस्वती प्रेस इटावा

( पश्चिमोत्तर देश )

# अथ मानवधर्ममीमांसाभाष्यद्वितीयखण्डस्य

## सूचीपत्रम् ॥

### चतुर्थाध्याय:-










## अथ पञ्चमाऽध्यायः ॥



## अथ षष्ठाऽध्यायः



## इति द्वितीयखण्डसूचीपत्रम् ॥

# अथ चतुर्थाध्यायारम्भः ॥



**चतुर्थमायुषो भागमुषित्वाऽऽद्यं गुरौ द्विजः ।**
**द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ॥१॥**

अ०—द्विजो ब्राह्मणादिरायुषश्चतुर्थमाद्यं भागं गुरौ गुरुसेवायामुषित्वा कृतदारोऽनुकूलभार्य्यया कृतविवाहश्चायुषो द्वितीयं भागं द्वितीयभागसमाप्तिपर्यन्तं गृहे वसेद् गृहस्थो भूत्वा गृह्याणि कार्याणि सम्पादयेत्। अत्र कालाध्वनोरत्यन्तसंयोगे द्वितीया बोध्या ॥

भा०—चतुर्थपञ्चमाध्याययोर्गृहाश्रमकृत्यं विशेषतो व्याख्यास्यते। पञ्चमहायज्ञानां गृहस्थे प्राधान्येऽप्यन्याश्रमद्वयेपि तेषां कर्त्तव्यत्वमस्ति। अस्मिंश्चाध्यायद्वये ततोऽप्याधिक्येन गृहस्थानामेव कृत्यमस्ति। पश्येमशरदः शतम्। शतायुर्वै पुरुषइति सामान्यकथनाच्छतं वर्षाणि मनुष्याणां पूर्णमायुस्तेषां पञ्चविंशतेर्वर्षाणां प्रत्येकश्चतुर्थो भागस्तथासति पञ्चविंशत्यब्दावधि गुरुसन्निधौ ब्रह्मचर्येण वेदाध्ययनं ततः पञ्चाशद्वर्षावधि गृहस्थेन भाव्यम्। एवमन्त्यभागद्वयेनाश्रमद्वयं कार्यमिति विभागः। एवं च तृतीयाध्यायारम्भे षट्त्रिंशदाब्दिकं चर्यं यदुक्तं तन्नोपपद्यते। अत्रेदं समाधानं

बोध्यम्—देशकालाधिकारिभेदादनेकविधः कालादिनियम आश्रमेषु सम्भाव्यते । कस्मिन्नपि काले यस्याधिकमायुः सम्भवति तेन तदा षट्त्रिंशद्वर्षाणि ब्रह्मचर्यमनुष्ठेयम् । शतायुष्ट्वेऽपि यो गृहाश्रमसुखं विशेषतो नाभिलषति स बहुकालावधि ब्रह्मचर्ये स्थित्वा मध्येऽल्पेनैव कालेन कृतदारः पुत्रमेकं पुत्रद्वयं वोत्पाद्य सद्यो वने वसेत् । केनचिच्च गृहाश्रमोऽपि कर्त्तुं न युक्तः । ये च मध्यमकक्षायां गृहसुखमपेक्षन्ते तदर्थमायुषो भागचतुष्टयआश्रमचतुष्टयानुष्ठानविधिः । ये च गृहाश्रमे स्थातुं नेच्छन्ति नहि तदर्थं धर्मशास्त्रे नियोगो लक्ष्यते । अधिकारिभेदं पुरस्कृत्यैव तदार्धिकं पादिकं वेत्यादिना ब्रह्मचर्यकालेऽपि विकल्पाः प्रदर्शिताः ॥१॥

भाषार्थः—(द्विज आयुषश्चतुर्थमाद्यं भागं गुरावुषित्वा) ब्राह्मणादि द्विज अपनी आयु के पहिले चतुर्थभाग नाम पच्चीश वर्ष की अवस्था पर्यन्त गुरु की सेवा में वेदाध्ययन के लिये वस कर (कृतदारः) अनुकूल निर्दोष कन्या से विवाह करके (आयुषो द्वितीयं भागं गृहे वसेत्) आयु के द्वितीय भाग नाम पचाश वर्ष के आयु पर्यन्त घर में स्त्री के समीप निवास करे। अर्थात् गृहस्थ बन कर धर्मानुकूल गृह के कार्यों की सिद्धि करे ॥

भा०—चौथे पांचवें अध्यायों में विशेष कर गृहाश्रम का ही कृत्य कहेंगे। पूर्व तृतीयाध्याय में कहे पांच महायज्ञों की गृहस्थ में प्रधानता होने पर भी अन्य ब्रह्मचर्य और वानप्रस्थ में भी उन को कर्त्तव्य ही माना है। इस कारण तृतीयाध्याय के विषय का अन्याश्रमों के साथ भी सम्बन्ध है। परन्तु इन चतुर्थ पञ्चम दो अध्यायों में उस से भी अधिक गृहस्थों का ही कर्त्तव्य है। “हम सौ वर्ष तक देखें नेत्र हीन न हों। तथा मनुष्य का आयु सौ वर्ष का होता है इत्यादि वेदादिशास्त्र प्रमाणों के अनुसार मनुष्यों का आयु सौ वर्ष का नियत है उन में पच्चीश २ वर्ष के प्रत्येक चार भाग होते हैं जिन में से पहिले पच्चीश वर्ष यज्ञोपवीत संस्कार तक विशेष बाल्यावस्था के आठ वर्ष छोड़ कर सत्र

पूर्व ब्रह्मचर्य काल होता है। ऐसा होने पर २५ वर्ष तक ब्रह्मचर्य, तथा उस से आगे ५० वर्ष तक गृहाश्रम इसी प्रकार आयु के अन्तिम दो भागों में वानप्रस्थ संन्यास दो आश्रम करने चाहिये ऐसा विभाग हो जाने पर तृतीयाध्याय के आरम्भ में छत्तीश वर्ष का जो ब्रह्मचर्याश्रम कहा है वह ठीक नहीं बनता। इस का समाधान यह है कि देश काल और अधिकारियों के अनेक भेद वा प्रकार होने से आश्रमों में कालादि का नियम अनेक प्रकार का अपेक्षित है। किसी काल में जिस का आयु सौ वर्ष से अधिक ( भूयश्च शरदः शतात् ) के अनुसार होना सम्भव है। उस को उस काल में छत्तीश वर्ष पर्यन्त ब्रह्मचर्याश्रम का सेवन करना चाहिये। और सौ वर्ष का आयु होने पर भी जो गृहाश्रम का सुख विशेष कर भोगना नहीं चाहता वह बहुत काल तक अर्थात् ८ वर्ष की अवस्था में उपनयन संस्कार करके बारह २ वर्ष तीनों वेद को ब्रह्मचारी बन कर व्रती हुआ पढ़े तो ३६ वर्ष का ब्रह्मचर्य करके ४४ वर्ष की अवस्था पूरी होने पर थोड़े काल के लिये अर्थात् छः वर्ष में एक वा दो पुत्र हो जाने तक विवाह करके गृहाश्रम में रहे पश्चात् शीघ्र ही वानप्रस्थाश्रम को स्वीकार करे। तथा कोई अधिकारी ऐसा हो सकता है जिस को गृहाश्रम करने की सर्वथा ही इच्छा न हो वह गृहस्थ भी न बने। और जो बीच की कक्षा में रह कर गृहस्थाश्रम के सुख को भी चाहता है उसके लिये आयु के चार भागों में चारों आश्रमों के सेवन का विधान है। जो लोग गृहाश्रम में रहना ही नहीं चाहते उन के लिये धर्मशास्त्र में कोई विशेष आज्ञा वा नियम नहीं है कि उन को भी गृहाश्रम अवश्य करना ही चाहिये। अधिकारियों का भेद मान कर ही तृतीयाध्याय के आरम्भ में आधा वा चौतिहाई ब्रह्मचर्य काल के विकल्प दिखाये हैं ॥१॥

**अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।**
**या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥**
**यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः।**
**अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ॥३॥**

अ०-अनापदिकाले भूतानां प्राणिनामद्रोहेण या वृत्तिरल्पद्रोहेण वा तां समास्थाय विप्रो जीवेद् भोजनादि

निर्वाहं कुर्यात् । अगर्हितैरधर्मांशरहितैः स्वैरेव कर्मभिर्न क्षत्रियादीनां यात्रामात्रप्रसिद्ध्यर्थं साधारणभोजनवसनैर्निर्वाहायैव नतूत्तमोत्तमसुखभोगाभिलाषपूर्त्तये शरीरस्याक्लेशेनैव नतु परिश्रमाधिक्येन धर्मं विस्मृत्यायुषो हानिं वा कृत्वा धनसंचयं कुर्वीत ॥

भा०–वक्ष्यमाणे शिलोञ्छसन्तोषवृत्ती सर्वथैव द्रोहरहिते याचनवृत्तौ वणिग्वृत्तौ वा कृष्याद्यपेक्षयाल्पो द्रोहस्तस्मात्पूर्वे वृत्ती उत्तमे उत्तरे च मध्यमे अन्त्ये च निकृष्टे, ये साधारणनिर्वाहायैव वृत्तिमपेक्षन्ते न ते लोभाधिक्यादधर्माधिक्यं कुर्वन्ति नवा धर्मानुष्ठानायानवकाशा भवन्ति । ब्राह्मणेन यथा स्वकर्म सुकरं न तथाऽन्यदीयमतः स्वकर्मणाऽधिका धर्मार्थसिद्धिः । श्रमाधिक्येन क्लेशेन ये धनसंचयार्थं यतन्ते न ते श्रान्ता धर्ममनुष्ठातुमुत्सहन्तइति मत्वा गृहस्थविप्रेण यथोक्तं यथोचितमेव कर्म कार्यम् ॥ ३ ॥

भावार्थः–( अनापदि भूतानामद्रोहेणैव पुनरल्पद्रोहेण वा ) आपत्काल से भिन्न अनुकूल समय में प्राणियों के साथ सर्वथा ही द्रोह न करके अर्थात् किसी प्राणी को किंचित् भी पीड़ा न पहुंचा कर वा ऐसा न हो सके तो जिस प्रकार अन्यों को बहुत थोड़ा कष्ट पहुंचे जो न पहुंचने के समान ही माना जाय ऐसे आचरण वा कर्म द्वारा (या वृत्तिस्तां समास्थाय विप्रो जीवेत्) जो जीविका हो सकती है उसीका आश्रय लेकर ब्राह्मण अपना कालक्षेप करे (अगर्हितैः स्वैः कर्मभिः) अधर्मांश से होने वाली निन्दा से रहित अपने ही शुद्ध निर्दोष वेदोक्त कर्मों से किन्तु क्षत्रियादि के कर्मों से नहीं ( यात्रामात्रप्रसिद्ध्यर्थम् ) साधारण भोजन वस्त्रादि द्वारा निर्वाहमात्र के लिये किन्तु उत्तम२ सुखों के भोग की अभिलाषा पूर्ण करने के लिये नहीं ( शरीरस्याक्लेशेन ) शरीर को अधिक कष्ट देकर किन्तु परिश्रम की अधिकता से धर्म को भुला के वा आयु की हानि करके नहीं ( धनसंचयं कुर्वीत ) गृहस्थ ब्राह्मण धनादि पदार्थों का संचय करे ॥

भा०-आगे कही शिलोञ्छ और सन्तोष से होने वाली ये दो जीविका सर्वथा ही द्रोह रहित हैं इन के द्वारा किसी को कुछ भी कष्ट नहीं पहुंचता। याचनवृत्ति और वाणिज्य इन दोनों में कृष्यादि की अपेक्षा अल्प द्रोह है नाम दूसरों को कम कष्ट पहुंचता है इस से ये दोनों वृत्ति नाम जीविका मध्यम तथा पहिली दोनों उत्तम हैं। और अन्त्य की दो जीविका निकृष्ट हैं। जो ब्राह्मण लोग साधारण निर्वाह के लिये ही जीविका चाहते हैं उन को लोभ की अधिकता से अधिक अधर्म नहीं करने पड़ता और धर्म के लिये अवकाश भी मिल सकता है। ब्राह्मणादि मनुष्य जैसा अच्छा अपने २ काम को कर सकते हैं वैसा अन्य क्षत्रियादि कोई नहीं, वा कुलपरम्परा से होते आने के कारण जो जिस काम को अच्छी सुगमता से अच्छा कर सकता है वह २ कर्म जिस २ वर्ण का होना उचित है वह २ ब्राह्मणादि है। इसी कारण अपने २ कर्म से धर्म तथा अर्थ की अधिक सिद्धि कर सकता है। जो लोग अधिक परिश्रम के साथ बड़े २ कष्ट सह के धनसंचय के लिये प्रयत्न करते हैं वे अपनी बुद्धि और शरीर की सब शक्ति को उसी में झोंक कर स्वाहा कर देते उन्हीं कामों को करते २ अन्त समय आ जाता है वे फिर धर्म का अनुष्ठान नहीं कर पाते ऐसा मान कर गृहस्थ ब्राह्मण को चाहिये कि यथोचित धर्म को धक्का न दे के धर्मानुकूल कर्म करता रहै ॥ ३ ॥

ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते ॥
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥ ६ ॥

अ०-ऋतादिनामका ब्राह्मणवृत्त्यर्थं षडुपाया उत्तममध्यमनिकृष्टाः। तत्रोञ्छश्च शिलश्चोञ्छशिलमापणरथ्या-

दिपतितस्यास्वामिधान्यादेरादानमुञ्छो लूनक्षेत्रादि पतित-सतुषान्नार्जनं शिलइति द्वयमृतसंज्ञकमुत्तममतो निकृष्टम-याचितस्य सन्तोषेणावस्थिताय यद्दानं तदमृतसंज्ञकं ततो निकृष्टममायया याचितं भैक्षं ततोऽपि निकृष्टं प्रमृतं कर्षणं कृष्याजीवनम् । ततोऽपि निकृष्टं कस्मिन्नप्यंशे कृषेरुत्कृष्टं च सत्यानृतं यत्र सत्यमसत्यं चोभयमपि सम्भवति ता-दृशं वाणिज्यं तेन चैवाप्यापदि जीव्यते जीविकां कर्त्तुम-र्हतीति कथयता कृषितोऽस्योपायस्योत्कृष्टत्वं प्रदर्शितम् । सेवा दास्यं कर्म श्ववृत्तिःशुनइव स्वामिमुखावलोकनेन जी-वनोपायोऽतिनिकृष्टस्तस्मात्तां वृत्तिं परितः सर्वथाऽऽपत्का-लेऽपि वर्जयेत् ॥

भा०—अन्वर्था ऋतादयः सञ्ज्ञाः । सर्वापेक्षयोञ्छशिलं सत्यं न तत्कस्याप्यासीदपितु य आददीत तस्यैव तत् । अ-याचितादानमप्यन्यस्यैवादीयते यः स्वेच्छया सन्तोषेणाव-स्थिताय ददाति न तस्य कश्चित् क्षोभो दुःखलेशोऽपि दान काले भवत्यतोऽयाचितममृतं सर्वथैव हिंसादोषशून्यम् । ये च प्रत्यहं याचन्ते तान् दूरतएव दृष्ट्वा दातारो वदन्त्यागतोऽयं दातव्यं भविष्यति सदैव पीडयत्यस्मानिति दातॄणां पीड-नाद्धिंसनादेव याचितं मृतमित्युक्तम् । कृष्या जीवनेन भू-मिस्थप्राणिनां विशिष्टा हिंसा विग्रहादिनाऽन्येषां पीडा च तस्मात्तत्प्रमृतं पूर्वस्मादपि विशिष्टहिंसायुक्तम् । सत्यं स्वीयं वस्तु तस्य दानमपि सत्यं तत्प्रतिनिधित्वेनान्यस्यादानम-नृतं तस्मादेव तस्य सत्यानृतत्वं न च मिथ्याभाषणमपि

वाणिज्य आवश्यकमिति अमितव्यम्। यो गोधूमचूर्णादि-
कमन्यस्मै ददाति पश्चाच्च ततो नादत्ते नासौ वणिङ् न च
तद्वाणिज्यं कर्म । दानापेक्षयाऽऽदानस्य मनुना स्वयमेव
स्पष्टं निकृष्टत्वमुक्तम् । "आदानमप्रियकरं दानं च प्रिय-
कारकम्। दाता नित्यमनादाता सर्वभूतानुकम्पकः" दाना-
पेक्षया चादानस्य निकृष्टत्वेऽपि छलेन वाणिज्यं ये कुर्वन्ति
तदपेक्षया यथोचितदानादानरूपवाणिज्यस्यात्युत्तमत्वं सि-
ध्यत्येव । "वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥" इत्यापत्का-
लिकजीवनोपायवर्णनप्रसङ्गे दशमाध्याये मनुना वाणिज्या-
पेक्षया कृषेर्निकृष्टत्वं स्पष्टमेव सूचितम् ॥ तथापि मांसाद्यु-
तिनिकृष्टवस्तुविक्रयापेक्षया कृषिरप्युत्तमैवेत्यनुमेयम्। एकै-
कस्यां च जीविकायां बहवोऽवान्तरभेदाः सदा सम्भवन्त्येव
तेनोत्तरोत्तरासु निकृष्टासु कस्याश्चिदुत्कृष्टवृत्तेरपेक्षयाऽऽधि-
क्येन निन्दितायामपि कस्यांचिद् वृत्तौ किमपि कृत्यं ततो
निकृष्टापेक्षया धर्मशास्त्रादिषु प्राशस्त्येनोपदिष्टं सम्भवति।
एवं पूर्वपूर्वासु प्रशस्तवृत्तिषु ततोऽधमापेक्षया विहिते प्र-
शस्तेऽपि कस्मिंश्चित्कर्मणि ततोप्युत्तमापेक्षया त्याज्यत्वं
विहितमुपलभ्येत तदेतच्छास्त्रसङ्गतिं सापेक्षविचारेण प-
श्यद्भिर्निर्दोषमेव द्वयमपि सम्यक् प्रतीयते । अल्पज्ञाश्च
दोषानेव पश्यन्ति न तेन शास्त्रं दूष्यते । सर्वाएव वृत्तयः
सार्वकालिकाः षट्स्विमास्वन्तर्भवन्ति। राज्ञो वृत्तिः काचित्तु
सत्यानृता यत्र रक्षणादिप्रतिनिधित्वेन धनाद्यादानं कुत्र-

चित्कर्षणाय भूखण्डरूपं क्षेत्रमुदकं वा दत्वा प्रजाधनं ह्रि-यते कुत्रचिच्च याचनेनादानं कुत्रचिदयाचितमेवागच्छति। प्रायेण च निर्बलप्रजाः प्रपीड्य राज्ञा धनं संचीयत आदी-यते तस्मादन्यदुःखहेतुत्वात्तस्य यौगिकार्थेन मृतत्वं प्रमृ-तत्वं वेति वक्तुं शक्यते। कुसीदवृद्धिः सर्वा च शिल्पविद्या वाणिज्यान्तर्गता न ततो व्यतिरिक्ता। घोरस्तस्य प्रतिग्रहइ-ति वदता मनुना राजायस्य मृतत्वादिना निकृष्टत्वं सूचितम् राजकर्मचारित्वं वैतनिकत्वं च सेवावृत्तावेव सर्वमन्तर्भवति सेवायां च बहुभेदभिन्नायां कस्मिंश्चिदुत्तमाधिकारे नियु-क्तोऽपि कश्चित्प्रत्यक्षतो भिक्षुकाद्यपेक्षयाऽधिकसुखयुक्तो बहुप्रकारेण लक्ष्यमाणोऽपि यदा सुखदुःखयोर्मूलमन्विष्यते "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्" तदा नासौ प-राधीनः कृताधिकधनसंचयोऽपि स्वाधीनभिक्षुकाद्यपेक्षया प्राप्ताधिकसुखः सम्भवति। मायाविस्त्वलोभाधिक्यादिना यद्भिक्षकादीनां विशिष्टं दुःखं तत्तु भिन्नकारणकमितर त्रापि मायाद्यानुकूल्येन सम्भवत्येव ॥ ६ ॥

भाषार्थः—ऋतादिनामक ब्राह्मण की जीविका के लिये उत्तम मध्यम निकृष्ट छः उपाय हैं उन में ( ऋतमुञ्छशिलं ज्ञेयम् ) बाजार वा रास्ता आदि में फैला, जिस का कोई स्वामी न हो ऐसे अन्न को बीन बटोर लाना उञ्छ क-हाता और खेत काटने वालों से गिरा गेहूं जौ आदि की बाली सहित अन्न जिस का कोई स्वामी न हो वह शिला कहाता उस को बीन लाना दोनों का नाम ऋत है यही सब से उत्तम ब्राह्मण की जीविका है ( अमृतं स्यादयाचि-तम् ) इस से नीचा सन्तोष से बैठे हुए को जो कोई विना मांगे कुछ दे देवे उसी से निर्वाह कर लेना अमृत कहाता है इसी का नाम सन्तोषवृत्ति भी है। इस से भी निकृष्ट ( मृतं तु याचितं भैक्षम् ) छल कपट चालाकी छोड कर अ-

पने निर्वाहमात्र के लिये अनेक घरों से भिक्षा मांग लाना जो न देवे उस के पीछे न पड़ना वा जो श्रद्धा से न दे उस को भी न सताना इत्यादि प्रकार से भिक्षा मांग कर निर्वाह करना स्नातक ब्राह्मण के लिये तृतीयकक्षा की जीविका है इस से भी निकृष्ट ( प्रमृतं कर्षणं स्मृतम् ) खेती करके जीविका करना पहिली भिक्षा वृत्ति से भी अधम है इसी से इस का नाम प्रमृत है [ समय बदल जाने अधर्मियों में भिक्षावृत्ति आ जाने से सम्प्रति खेती से भी नीच भिक्षावृत्ति हो गई ] उस से भी नीच वा किसी अंश में खेती से अच्छा ( सत्यानृतन्तु वाणिज्यम् ) जिस में अपना विक्रेय वस्तु देना सत्य और दूसरे से उस का धनादि मूल्य लेना अनृत असत्य ये दोनों जिस में रहते ऐसा वाणिज्य कर्म जीविका है ( तेन चैवापि जीव्यते ) उस वाणिज्य के द्वारा भी आपत्काल में ब्राह्मण जीविका करे वा कर सकता है । इस कथन से खेती की अपेक्षा इस जीविका को आपत्काल में ब्राह्मण के लिये अच्छा कहा जाता ( सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ) सेवा दासयभाव [ खिदमतगारी ] कुत्ते कीसी जीविका सब से बुरी है इस से इसे छोड़ देवे ॥

भा०—यहां ऋत आदि छः जीविकाओं के नाम सार्थक हैं किन्तु रूढि संज्ञा नहीं हैं । सब की अपेक्षा शिलोञ्छवृत्ति सत्य नाम यथार्थ निर्दोष है क्योंकि वह हाट बाजार मार्ग वा खेत आदि में गिर गया अन्नादि किसी का नहीं उस का कोई स्वामी नहीं किन्तु जो उस को ले जावे वही स्वामी हो जाता है । [इसी कारण उस के द्वारा जीविका करने वाले से किसी को किञ्चित् भी कष्ट नहीं पहुंचता । यदि कभी कहीं खेतादि में किसी का इतना अन्न गिर गया हो जिस को क्षेत्र स्वामी लेना चाहता हो तो शिलोञ्छवृत्ति वाला जान कर न लेवें यदि अज्ञान से ले आने पर ज्ञात हो तो फिर उसी स्वामी को दे देवे । सम्प्रति शिलोञ्छवृत्ति नीच समझी जाती है । इस का कारण यह है कि वे शिलोञ्छवृत्ति वाले धर्मनिष्ठ नहीं होते धर्म के लिये नहीं करते किन्तु वे भी अपने को दीन निकृष्ट मानते हैं सन्तोषादि धर्म उन में नहीं हो । वैश्यपन सम्प्रति उत्तम कोटि में आगया तभी से ऐसे वचन बनने लगे कि "यस्यास्ति वित्तं स नरः कुलीनः" इसी से धर्म की महिमा घट गयी ] विना मांगे किसी से निर्वाहार्थ जो मिल जाय उस को लेकर निर्वाह करने में भी अन्य का ही लेना है । मांग कर लेने की अपेक्षा उस में देने वाले का भार वा ऋण लेने वाले पर नहीं तथापि ऋत

की अपेक्षा विना मांगे लेके निर्वाह करने वाले पर भी कुछ भार अवश्य होता है इसी कारण ऋत से नीचा द्वितीय कक्षा में अयाचित है। परन्तु अपनी इच्छा और श्रद्धा से देने वाले को कुछ कष्ट वा लेश मात्र भी दुःख नहीं होता इस कारण अयाचित का नाम अमृत है। जो सर्वथा मृत नाम हिंसा दोष से शून्य हो वह अमृत कहाता है। और जो प्रतिदिन भिक्षा मांगते हैं उन को दाता लोग दूर से देखते ही कहते हैं कि "यह आया इस को कुछ देने पड़ेगा सदैव हम को कष्ट देता है" इस प्रकार दाता लोगों को पीड़ित करता और स्वयं भी उन के धमकाने आदि से पीडित होता इस कारण भिक्षावृत्ति का नाम मृत है। खेती करके जीविका करने से पृथिवी में रहने वाले असंख्य प्राणियों की हिंसा होती और खेती के कारण अन्यों को लड़ाई झगड़े द्वारा भी कष्ट पहुंचता है इस कारण भिक्षावृत्ति की अपेक्षा भी हिंसा की अधिकता से खेती द्वारा जीविका करना निकृष्ट होने से प्रमृत कहाता है। अपना वस्तु अन्न आटादि अन्य को देना सत्य नाम अच्छा उत्तम काम तथा उस के बदले पैसा वा अन्य वस्तु उससे लेना अनृत नाम बुरा वा असत्य है इन दोनों लेन देन को करके जीविका करना वाणिज्य कहाता है। इसी अर्थ से वाणिज्य को सत्यानृत कहा है। किन्तु अनृत नाम मिथ्याभाषण भी वैश्य वृत्ति वाले दूकन्दारों को करना ही चाहिये ऐसा अर्थ करके भ्रान्ति में कोई मत पड़ो। जो पुरुष आटादि किसी को देता है और उस के बदले में पैसे आदि उस का मूल्य उस से नहीं लेता वा नहीं लेना चाहता तो वह वणिक् वा वैश्य नहीं और न उस कर्म का नाम वाणिज्य होसकता है। इस लिये सत्यानृतरूप देन लेन दोनों ही वाणिज्य कहाते हैं। और देने की अपेक्षा लेने को मनु जी ने स्वयमेव निकृष्ट कहा है यथा- "लेना प्रीति को बिगाड़ने वाला और देना प्रीति बढ़ाने वाला है। इसीलिये मनुष्य को नित्य दानशील होना चाहिये किन्तु सब किसी से सब प्रकार के दान को लेने का स्वभाव न रक्खे परन्तु दान देके सदा परोपकार करे" इसी कारण विद्यादाता अध्यापक बड़ा और विद्या लेने वाला अध्येता उस से निकृष्ट माना जाता है। परन्तु दान की अपेक्षा आदान के निकृष्ट होने पर भी जो लोग छल कपट से वाणिज्य करते सरासर लोगों को ठगलेते हैं उन बड़े प्रसिद्ध ठगों की अपेक्षा ठीक २ देने लेने वालों का वाणिज्य अत्युत्तम है। तथा विद्या पुस्तकों आदि उत्तमोत्तम रत्न पदार्थों को बेंचकर निर्वाह करना सामान्य

यथोचित लेन देन से भी वाणिज्य में अत्युत्तम है। आगे दशमाध्याय के आपद्धर्म प्रकरण में मनु जी ने कहा है कि "अन्य प्रकार की जीविका से ब्राह्मण वा क्षत्रिय का निर्वाह न चलता हो तो आपत्काल में वैश्यवृत्ति से निर्वाह करने पर भी जिस में हिंसा और पराधीनता अधिक है ऐसी खेती की जीविका को प्रयत्न पूर्वक अवश्य छोड़ देवे। अर्थात् अन्य जीविका में कष्ट वा परिश्रम अधिक हो तो भी उस को करले पर खेती में कष्ट और परिश्रम कम हो तो भी धर्म की हानि अधिक सोच कर उसे न करे" इस कथन से मनु जीने वाणिज्य की अपेक्षा खेती का निकृष्ट होना अवश्य सूचित किया है। तथापि मांसमद्यादि अतिनिकृष्ट वा निकृष्ट वस्तु बेंचकर जीविका करने अथवा छल कपट द्वारा वाणिज्य करने वाले की अपेक्षा से खेती करना भी उत्तम ही है। जीविका के एक २ उपाय में बहुत अवान्तर भेद होने सदा ही सम्भव हैं। इस से अगले २ निकृष्ट जीविकाओं में किसी उत्तम जीविका की अपेक्षा से अधिक कर किसी जीविका के निन्दित होने पर भी उसी में कोई काम उस से निकृष्ट कर्म की अपेक्षा से धर्मशास्त्रादि में अच्छा कहा होना सम्भव है॥ तथा पूर्व २ उत्तम प्रशस्त जीविका में उस से निकृष्ट वृत्ति की अपेक्षा से विधान किये किसी उत्तम कर्म का उस से भी उत्तम की अपेक्षा त्याज्य होना कहा मिले यह भी सम्भव हैं। सो सापेक्ष विचार से शास्त्र की संगति को देखते जानते हुए विचारशील धर्मात्माओं की दृष्टि में ये दोनों ही प्रकार निर्दोष शुद्ध ठहरते और सम्यक् श्रद्धापूर्वक ग्राह्य होते हैं। और अल्पज्ञ लोगों को ऐसे विचारों में दोष ही दीखते हैं परन्तु इस से शास्त्र में कोई दोष नहीं आता। इन पूर्वोक्त ऋतादि नामक छः प्रकार की जीविकाओं में अन्य सब प्रकार की जीविका अन्तर्गत होजाती हैं। जैसे राजा की जीविका कोई तो सत्यानृत है जहां प्रजा की रक्षा आदि के बदले में राजा धनादि वस्तु लेता वा कहीं पृथिवी के खण्डरूप खेत वा कुल्या [नहर] द्वारा किसानों को जल देकर उस का मूल्य धन लेता है। कहीं राजा मांगकर लेता तथा कहीं विना मांगे भी धनादि आता है। पर सब दशाओं में निर्बल प्रजा को पीड़ा देकर राजा धनसंचय करता प्रजा से लेता है। इस कारण अन्योंको दुःख का हेतु होने से वह राजा का कर्म यौगिक अर्थ से मृत वा प्रमृत कहा जाय यह भी उचित ही है। (घोरस्तस्य प्रतिग्रहः) उस राजा के दान को लेना बहुत बुरा निकृष्ट है इस आगे कहे कथन से राजा की आमदनी को मनुजी

ने स्पष्ट ही मृत आदि अभिप्राय को लेकर निकृष्टता दिखायी है। व्याज सूद लेकर जीविका वा सब प्रकार की कला कौशलरूप शिल्पविद्या, विचार पूर्वक देखने शोचने से स्पष्ट ही वाणिज्य के अन्तर्गत है। तथा डिपटी तहसीलदारादि राजकर्मचारी भृत्य बन के जीविका करना सेवावृत्ति के अन्तर्गत ही है। सेवावृत्ति के अनेक भेद होने पर उत्तमाधिकार में किसी के नियुक्त होने से भी वह कोई राजकर्मचारी भिक्षुकादि की अपेक्षा से बहुत प्रकार ऊपर से अधिक सुखी दीख भी पड़ता हो तथापि जब खोज कर सुख दुःख का मूल देखा जाय तो "पराधीनता सब दुःख और स्वाधीनता सब सुख है" इस सिद्धान्त के अनुसार वह पराधीन डिपटी आदि अधिक धन बटोर लेने पर भी स्वाधीन भिक्षुकादि की अपेक्षा सुखी नहीं ठहरता। तथा छल कपट वा लोभ की अधिकतादि से जो भिक्षुकादि को अधिक दुःख होता उसका कारण भिक्षावृत्ति से भिन्न है वैसे तृष्णा की अधिकतादि कारण से यहां राजकर्मचारी को भी दुःख होता वा होना सम्भव ही है ॥ ६ ॥

कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥७॥
[सद्यःप्रक्षालिको वा स्यान्माससंचयकोऽपि वा।
षण्माससनिचयो वापि समानिचय एव वा ॥]
चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम्।
ज्यायान्परःपरो ज्ञेयो धर्मतो लोकजित्तमः ॥८॥

अ०–कुसूलपरिमितधान्यं संचितमनेन तादृशो वा स्यात्कुम्भी मृन्निर्मितं बृहत्पात्रं तत्परिमितसंचितधान्यको वा स्यात्। दिनत्रयाय चेष्टितधान्यको वा भवेत्प्रत्यहं संचयको वा स्यादिति यथासाध्योत्तमवृत्या स्वनिर्वाहाय स्नातकश्चतुर्विधविकल्पितसंचयेषु कतममपि देशकालानुकूलं सं-

-चयमङ्गीकुर्वीत। सद्यःप्रक्षालिकइति पद्यं कस्मिंश्चिदेव पुस्तक उपलभ्यते । एतेषां गृहमेधिनां गृहिणीसङ्गिनां कुसूलादिचतुष्टयसंचयिनां स्नातकविप्राणां मध्ये धर्मतो धर्ममाश्रित्य लोकान् जनान् त्यागसन्तोषाभ्यामतिशयेन जयति तादृशः परःपरो ज्यायान् विशेषेण प्रशंसार्हो ज्ञेयः ॥

भा०- ऋतादयः षड्जीविकोपायास्तैर्गृहस्थविप्रेण कियान् संचयः कर्त्तुमुचितइति कथ्यते। कुसूलादिपदानि बहुप्रकारार्थपराणि नानाप्रमाणानि भवितुमर्हन्ति । तथापि त्र्यहैहिकाश्वस्तनिककथनसाहचर्यादल्पसंचयकस्य ज्यायस्त्वकथनाच्च "द्वादशाहं कुशूलेन वृत्तिः कुम्भ्या दिनानि षट्" इति कस्यचित्कथनानुकूलमेवार्थग्रहणं साधु प्रतीयते। कुल्लूकादयस्त्वतो विरुद्धं भाषमाणा बहुसंचयं स्वस्येवान्येषामपि साधु मन्यन्ते । शरीरेण धनादिसंचयमुपेक्षमाणो यादृशं यावन्तं च धर्ममनुष्ठातुं शक्नोति न तादृशं तावन्तं च धनाद्यर्जनरक्षणासक्तइति मत्वैव परस्यपरस्य ज्यायस्त्वं साधीयः सम्पद्यते। अन्यत्राप्युक्तम्-"धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता" सर्वत्रैव तात्पर्यमवगच्छता धर्मतत्त्वं विज्ञातुं शक्यते । यदभिप्रेत्य यत्कर्त्तुमुच्यते तत्तात्पर्यं यद्यन्यथाकरणेन सुफलं सम्भवति तथैव क्रियमाणे देशकालादिभेदेन नैष्फल्यं च सम्भाव्यते तदा बुधेन साफल्यार्थमेवोद्योगः कार्यः। यः संग्रहमपेक्षते नासौ सन्तुष्टो विरक्तो वा सम्भवति। धनादिसंग्रहश्च जलाशयादुदकमिव धनिभ्यएव सम्भवति तस्मात्संग्रही विप्रो धन्याधीनो भवति त्यागे च

धनिनोऽपि तस्य वशे जिता भवन्ति तस्माद् गृहस्थदशायामपि वैराग्यं मुख्यम् ॥ ८ ॥

भाषार्थः-(कुसूलधान्यको वा स्यात्) स्नातक गृहस्थ ब्राह्मण कुठला वा कुठिया भर अन्न का संचय करे ( कुम्भीधान्यक एव वा) वा गोरी-कटा वा बड़े घड़ा भर अन्न का संचय एक बार करे (त्र्यहैहिको वापि भवेत् ) वा तीन दिन का निर्वाह जितने से चल सके इतने अन्न का संचय करे अथवा (अश्वस्तनिक एव वा) इतना अन्न किसी उत्तम जीविका के उपाय से लावे जो उसी दिन का काम चलजाय अगले दिन को कुछ न बचे जिस से चोर आदि का भय वा रक्षा का ध्यान न रहे । इस के आगे किसी २ पुस्तक में एक यह श्लोक भी मिलता है "कि (सद्यःप्रक्षालिको वा०) तत्काल लाकर खालेवे मध्याह्न का लाया सन्ध्या को भी न रक्खे यदि सन्ध्या को अपेक्षा हो तो फिर ले आवे । वा एक मास के लिये संचय करे तथा छः मास के लिये वा एक वर्ष के लिये इकट्ठा करके रख लेवे" (चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम्) उक्त चार प्रकार की जीविका वाले चार प्रकार के गृहस्थ ब्राह्मणों में से (धर्मतो लोकजित्तमः परःपरो ज्यायान् ज्ञेयः ) पर २ नाम अगला २ धर्म का अधिक २ सेवन कर सकने से लोगों को वशीभूत अपने अनुकूल करने वाला होने से अतिश्रेष्ठ जानने मानने योग्य होता है ॥

भा०-ऋतादि नामक जीविका के छः उपाय पूर्व कहे उन के द्वारा गृहस्थ ब्राह्मण को कितने अन्नादि का संचय करना चाहिये यह विचार यहां कहते हैं। यद्यपि कुसूल नाम कुठलादि वाच्य वस्तु छोटे बड़े नाना प्रकार के होते और हो सकते हैं इस कारण कुसूल वा कुम्भी कहने से अन्न के परिमाण का कुछ निश्चय नहीं हो सकता कि गृहस्थ कितना अन्न संचित करे-तथापि तीन दिन और एक दिन कहने के योग से और अल्पसंग्रही को उत्तम कहने से यह सिद्ध होता है कि "(द्वादशाहं०) बारह दिन के निर्वाहार्थ जितना अपेक्षित हो उस अन्न को कुसूल नाम कुठलाभर तथा छः दिन के निर्वाहार्थ अपेक्षित कुम्भीधान्य कहाता है" इस में जिस गृहस्थ का जितना थोड़ा वा बहुत स्त्री पुत्रादि का व्यय हो वैसे ही बड़े छोटे उस के कुसूल तथा कुम्भी माने जायंगे। इस रीति से उस का परिमाण भी नियत हो जाता है । (द्वादशाहं०) इत्यादि

किसी अन्य ग्रन्थकार का वचन है इसी के अनुसार यहां अर्थ लेना अच्छा प्रतीत होता है। कुल्लूक भट्टादि टीकाकार इस से विरुद्ध कहते हुए अपने समान अन्य ब्राह्मणों को भी अधिक संचय करना अच्छा मानते हैं सो ठीक नहीं धनादि के संग्रह से उपेक्षा उदासीनता रखता हुआ जैसा और जितना अपने शरीर से धर्म का सेवन कर सकता है, वैसा वा उतना धर्म धनादि के संग्रह वा रक्षा में फसा हुआ पुरुष कदापि नहीं कर सकता ऐसा मान कर ही अगले २ को श्रेष्ठ कहना ठीक बनता है। अन्यत्र भी कहा है कि "धर्म के लिये जो धन का संग्रह करना चाहता है उस को अति उचित है कि वह परिश्रम [तकलीफ] न उठावे" क्योंकि धन के उपार्जन में जितना अधर्म लगेगा उस की शुद्धि मात्र धन से धर्म करने द्वारा हो सकती है और शरीर से केवल निर्दोष शुद्ध धर्म हो सकता है। इस लिये जो सर्वत्र मुख्य सिद्धान्त को ठीक जानता है वही धर्म के तत्त्व को जान सकता है। जिस अभिप्राय को लेकर जो कर्म करने को कहा गया है वही अभिप्राय उस काम को अन्य प्रकार करने से यदि सिद्ध हो सकता है और कहे अनुसार करने से देश कालादि का भेद हो जाने के कारण निष्फलता होनी सम्भव है तब बुद्धिमान् पुरुष को सफलता प्राप्त करने का उद्योग करना चाहिये और ऐसा ही उद्योग शास्त्रानुकूल माना जायगा। जो धनादि का संग्रह करना चाहता है वह सन्तुष्ट और विरक्त नहीं और कूपादि जलाशय से ही जल मिल सकने के समान धनियों से ही धन प्राप्त वा संगृहीत हो सकता है इस कारण संग्रही ब्राह्मण धनियों के आधीन हो जाता वा रहता है। और धनादि का त्याग रखने पर धनी लोग भी उस के आधीन वशीभूत हो जाते हैं इस कारण ब्राह्मण के लिये गृहस्थ दशा में भी वैराग्य उत्तम है ॥८॥

**षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्त्तते।**
**द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥९॥**

अ०—एषां पूर्वोक्तचतुर्विधगृहमेधिनां मध्य एकः कुसूलधान्योऽध्यापनादिषट्कर्मा भवति। अन्यस्त्रिभिरध्यापनयाजनादानैः कर्मभिः प्रवर्त्तते। एकस्तृतीयः प्रतिग्रहं विहाय याजनाध्यापनाभ्यामेव कर्मभ्यां वर्त्तते चतुर्थस्तु

केवलेन ब्रह्मसत्रेण ब्रह्मणो वेदस्याध्यापनेन ब्रह्मयज्ञेन जी-वति "अध्यापनं ब्रह्मयज्ञः" इत्युक्तं च, ब्रह्मसत्रं ब्रह्मयज्ञइति चानर्थान्तरम् । केचिदेनं श्लोकमेवं योजयन्ति—एकः कुसू-लधान्यक ऋतादिषट्कर्मा,द्वितीयः कुम्भीधान्यक आद्यैरृ-तादित्रिभिस्त्र्यहैहिकस्तृतीय ऋतामृतद्वयेन चतुर्थोऽश्वस्त-निकः शिलोञ्छेनैव जीवति । तदेतच्चिन्त्यमेकेनैवोपायेन कृतकृत्यः किमर्थं षट्कर्मा स्यात् । असाध्यमप्येकेनोपाय षट्कं ये चैकेनोपायेन यावदर्थं फलं नोपलभन्ते तत्र कर्म कर्त्तृसाधनानामन्यतमस्य द्वयोस्त्रयाणां वा वैगुण्यमेव हेतुः एवं य एकैकर्त्ताद्युपायेन यावदर्थं संचेतुमशक्तो नासौ स-र्वोपायैरपि फलभाक् सम्भवति । यावता साङ्गोपाङ्गत्वेनैकै-कमेव कष्टसाध्यं तावता सर्वं कथं सुसाध्यं स्यात् । दृष्ट-विरोधश्चास्त्येव नहि कृषका वाणिज्यं वणिजो वा कृषिं द्वावपि भिक्षावृत्तिं वा कुर्वाणा दृश्यन्ते कर्त्तुमशक्तत्वात् नहि कदाचित् कस्यचिद्वस्तुनः क्रयविक्रयाभ्यां कृषको वणिग्भवत्येवं चेत्सर्वएव सर्वेस्युस्तथाचैकद्वित्रिकर्माणोऽपि षट्कर्माणः स्युरनिष्टं चैतत्तस्मान्नायमर्थः साधुरिति ॥

भा०—षट्कर्माण्यग्रजन्मनइति प्रथमाध्यायउक्तमत स्वरितत्वादध्यापदीन्येव षट्कर्माणि । अयाचनवृत्तौ कि मपि कर्मैव नास्ति तस्माद्योऽधिकसंग्रहमपेक्षेत सोऽध्या-पनादिषट्कर्माणि कुर्यात् । यश्च ततो न्यूनं कुम्भपरिमित धान्यमपेक्षेत स त्रिभिरेव कर्मभिर्वर्त्तेत ततोऽपि न्यूनापे क्षिणा प्रतिग्रहोऽपि हेयो यतः प्रतिग्रहः प्रत्यवरः । चतु

थैन च " वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते" इति सिद्धान्तं पुरस्कृत्य जीविकोपायः प्रात्यहिकएव सम्यग्बोध्यः। एषूत्तरोत्तरो गरीयान् । अध्यापनादीनि चाल्पकालीनि नैमित्तिकानि चैकेन कर्त्तुं युगपत् शक्यन्तइति सर्वमवदातम्॥

भाषार्थः—(एषामेकः षट्कर्मा भवति) इन पूर्वोक्त चार प्रकार के गृहस्थों में एक नाम कुठला भर अन्न रखने वाला षट्कर्मा होता अर्थात् उस को अध्यापन, अध्ययन, यजन, याजन, दान देना और लेना ये छहों काम करने चाहिये। तभी विशेष अन्नादि की प्राप्ति और धर्म दोनों चल सकते हैं ( त्रिभिरन्यः प्रवर्त्तते ) अन्य नाम दूसरा गोरी कटादि भर अन्न को संचित करने वाला अध्यापन याजन और दान लेना इन तीन कर्मों से प्रवृत्त रह के अपना निर्वाह करे। तो उस का निर्वाह और धर्म दोनों की अच्छी दशा रहेगी। ( द्वाभ्यामेकः ) एक तीसरा तीनदिन के निर्वाहार्थ संग्रह चाहने वाला प्रतिग्रह नाम दान लेने को छोड़ कर अध्यापन और याजन के द्वारा ही अपना निर्वाह करे क्योंकि तीन २ दिन के निर्वाहार्थ धनादि इन्हीं दो कर्मों से प्राप्त हो जाना अति सुगम है (चतुर्थस्तु ब्रह्मसत्रेण जीवति) और चौथा एक ही दिन के लिये चाहना रखने वाला ब्राह्मण ब्रह्मसत्र नाम एक ब्रह्मयज्ञ को ही करता हुआ अपना निर्वाह करे थोड़ी चाहना एक ही कर्म द्वारा सिद्ध हो सकती है। वेद को पढ़ने पढ़ाने का नाम ब्रह्मयज्ञ है यह पूर्व कह चुके हैं। सत्र और यज्ञ शब्दों का एक ही अर्थ है। कोई लोग इस श्लोक का अर्थ ऐसा करते हैं कि "एक-कुशूल धान्य का संचयी ऋतादि छहो जीविका के उपाय करे, द्वितीय कुम्भी धान्यार्थी उञ्छशिल, अयाचित और भिक्षा मांगना इन तीन कर्मों से निर्वाह करे, तीसरा तीन दिन का संग्रहार्थी शिलोञ्छ और अयाचित दो कर्मों के द्वारा निर्वाह करे और चौथा एक ही दिन को अन्न चाहने वाला केवल शिलोञ्छवृत्ति से ही निर्वाह करे" सो यह अर्थ चिन्तनीय इस लिये है कि यदि जीविका के लिये ठीक २ एक भी उपाय करे तो भी अधिक से अधिक खर्च का निर्वाह चल सकता है फिर किस लिये छः कर्म करे ? । और एक मनुष्य जीविका के सभी उपाय एक काल में कर सके यह दुस्तर भी है। जो लोग एक प्रकार की जीविका से अपने प्रयोजनमात्र फल को भी प्राप्त नहीं कर पाते

वहां उन में स्वयं वा उन की क्रिया में अथवा साधनों में न्यूनता [कसर] होवी, है ऐसे लोग जीविका के सब उपायों से भी अपना निर्वाह नहीं चला सकते। और यह प्रत्यक्ष प्रमाण से विरुद्ध भी है कि जब एक मनुष्य सब प्रकार के व्यापा संसार भर के सब पदार्थों का लेना बेंचना वा सब पदार्थों की खेती ही पूरी नहीं कर सकता तो जीविका के सब उपाय कैसे कर सकेगा ? और किसान लोग व्यापार करते नहीं दीखते न व्यापारी खेती करते तथा न ये दोनों भिक्षा मांगते हैं। क्योंकि ऐसा कर सकना असम्भव ही है कि व्यापार खेती दोनों एककाल में कोई करता हो ऐसा नहीं दीखता। और कभी किसी वस्तु के ले बेंचने से किसान व्यापारी होजाय तो सब ही सब हो जांयगे तब एक दो तीन कर्मों वाले भी छः कर्म कर्त्ता माने जांयगे क्योंकि कभी न कभी सब ही के सब काम किसी प्रकार करने पड़ते हैं सो यह अनिष्ट है इस लिये उक्तार्थ ठीक नहीं जान पड़ता॥

भा०-ब्राह्मण के छः कर्म हैं यह प्रथमाध्याय में कह चुके हैं इस कारण षट्कर्म पद से प्रतिपदोक्त वे ही षट् कर्म लेने चाहिये। सन्तोष से बैठे रहना बिना मांगे जो मिल जावे उसी से निर्वाह कर लेना इस में कोई कर्म ही नहीं है तब शिलोञ्छादि छः कर्म हो ही नहीं सकते इस लिये इस श्लोक का यही अभिप्राय ठीक है कि जो अधिक संग्रह चाहता है वह अध्यापनादि छः कर्म करे, उस से कम चाहने वाला तीन कर्म तथा उस से भी कम चाहने वाला दो ही कर्म करे, प्रतिग्रह को भी छोड़े क्योंकि दान लेने को मनु जी नीच काम इसी अध्याय में आगे कहा है और चौथा केवल नित्य निर्वाह ही चाहने वाला "निष्कारण वेद का अभ्यास करना ही ब्राह्मण का परम तप है" इस द्वितीयाध्याय में कहे सिद्धान्त को सामने रख के एक ही दिन के लिये प्रतिदिन जीविका का उपाय कर लेवे यही उत्तम है। इन चारों में पूर्व २ की अपेक्षा पिछला २ ब्राह्मण श्रेष्ठ माना जायगा जो जितना कम संग्रह करना प्रसन्द करता वह वैसा ही अधिक धर्मनिष्ठ हो सकता है। अध्यापनादि कर्म थोड़े समय तक होते हैं किन्तु दिन भर नहीं इस कारण याजनादि नैमित्तिक कर्म साथ में किये जा सकते हैं इस प्रकार सब विचार निर्दोष शुद्ध और संगत है॥

**वर्त्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः।**
**इष्टीः पार्वायनान्तीयाः केवला निर्वपेत्सदा।**

अ०-शिलोञ्छाभ्यामुपायद्वयेन जीविकां वर्त्तयन् कुर्वन्स्ना-तकविप्रोऽग्निहोत्रपरायणो नियमेनाग्निहोत्रं कुर्वन् पर्वयो-र्दर्शपौर्णमासयोरन्ते समीपे प्रतिपदि भवाः पार्वान्तीया अयनस्य संवत्सरस्यान्ते भवा आयनान्तीया आग्रहायणे-ष्टीः केवलाः सदा निर्वपेत् कुर्यात्। पर्वचायनं च पर्वायणे तयोरन्तौ तत्र भवाः पूर्वं स्वार्थिकमणं कृत्वा ततो वृद्धा-च्छः प्रत्ययः कार्यः ॥

भा० शिलोञ्छवृत्त्या जीवतः समीपेऽन्नधनाधिक्यसञ्चयो न सम्भवति ततश्च व्ययविशेषसाध्या अन्ये प्रधाना यज्ञा-स्तेनानुष्ठातुं न शक्यन्ते तदकरणे न कोऽपि दोषोऽस्ति त-दा साङ्गोपाङ्गस्याग्निहोत्रस्यैव नियमेनानुष्ठानं कार्यं नात्रा-न्नधनाधिक्यमपेक्ष्यते ॥ १० ॥

भाषार्थः --जिस के निकट खर्च कम हो अर्थात् लड़के बाले कम हों वा न हों ऐसा तपस्वी गृहस्थ ब्राह्मण (शिलोञ्छाभ्यां वर्त्तयन्) शिला बीन वा बा-जारआदि में से अन्न बीन कर जीवन का निर्वाह मात्र करता हुआ (अग्निहो-त्रपरायणः ) नित्य अग्निहोत्र करने में तत्पर रहे और उस के साथ ( पार्वा-यनान्तीयाः केवला इष्टीः सदा निर्वपेत् ) अमावास्या पौर्णमासी नामक पर्वों के अन्त में प्रतिपदा के आरम्भ में होने वाली दर्शेष्टि पौर्णमासेष्टि तथा वर्षान्त में विधान की गयी आग्रहायणेष्टि जो अगहन के आरम्भ में प्रतिपदा लगते हो होनी चाहिये । केवल इतना ही नित्य नैमित्तिक अग्निहोत्र यज्ञ किये जावे किन्तु इन से भिन्न बड़े २ खर्च वाले बड़े यज्ञ न करे ॥

भा०-शिलोञ्छवृत्ति से जीविका करने वाले के समीप में अन्न धनादि का अधिक संचय होना सम्भव ही नहीं क्योंकि अन्य जीविका कर सकने पर भी धर्म की अनुकूलता देख कर जो शिलोञ्छवृत्ति करेगा वह संचय करना स्वयं ही नहीं चाहेगा । इस कारण अधिक व्यय के द्वारा सिद्ध होने वाले ज्योतिष्टोमादि प-धान यज्ञों का अनुष्ठान वह पुरुष नहीं कर सकता और उन बड़े यज्ञों के न

करने से कोई दोष भी उस को नहीं लगता वा अधिक पुण्य से वञ्चित भी वह नहीं रह सकता क्योंकि उन यज्ञादि के लिये धन संग्रह करने में जो दोष लगेंगे उन से अधिक पुण्य यज्ञों द्वारा हो यह सम्भव है तथापि धनसंग्रह की ओर चित्त की फसावट न रहने पर शरीर के परिश्रम से जितना धर्म वा ब्राह्मण कर सकेगा वह धर्म उस यज्ञ के पुण्य से बहुत अधिक होगा तथा धनोपार्जन से लगने वाले दोषों से भी वह बचेगा । इस लिये उस त्यागी गृहस्थ को केवल साङ्गोपाङ्ग अग्निहोत्र का ही नियम से अनुष्ठान करना चाहिये इस अधिक अन्न धनादि की कुछ अपेक्षा नहीं है अपने निर्वाहार्थ जो मिले उसी से नित्य का अग्निहोत्र भी चल सकता है ॥१०॥

**न लोकवृत्तं वर्त्तेत वृत्तिहेतोः कथञ्चन ।**
**अजिह्मामशठां शुद्धां जीवेद् ब्राह्मणजीविकाम् ॥**

अ०–स्नातको विप्रो जीविकाप्राप्तिहेतोर्वेदादिशास्त्रविरुद्धं धर्महीनमधर्मयुतं वा किमपि लोकवृत्तं न वर्त्तेत न कुर्यात्किन्त्वजिह्मामवक्राशयामशठां परवञ्चनरहितां शठसंसर्गरहितां वा तादृशीं स्ववर्णस्य शुद्धामदोषां जीविकां जीवेत् ॥

भा०–गतानुगतिकत्वं लोके प्रधानं लोकाः प्रवाहेण प्रवृत्तं शास्त्रविरुद्धमपि यत्साधु मन्यन्ते तदेव योऽनुमोदते तस्य प्रतिष्ठां कुर्वन्ति जीविकां च तस्मै ददति सामान्येनायं लोकप्रवाहः । सुमार्गोपादानाभिमानिनोऽपि बहवो न कदापि लोकोत्तराः सम्भवन्ति किन्तु तन्नायकः कश्चित्कदाचित् कुत्रचिल्लोकप्रवाहाद्व्यतिरिच्यते । यश्च यथा लोकप्रवाहमत्येति तथैवाधिकं केवलं धर्मं संचिनोति तस्मात्सर्वैः शास्त्रमर्यादाविद्भिः सर्वदैव लोकप्रवाहान्निस्सृत्य शास्त्रसृतिमनुसर्त्तुं प्राबल्येनोद्योगः कार्यः ॥ ११ ॥

भाषार्थः—गृहस्थ ब्राह्मण ( वृत्तिहेतोर्लौकवृत्तं कथंचन न वर्त्तेत ) जीविका प्राप्त होने के कारण वेदादिशास्त्र की आज्ञा से विरुद्ध धर्म रहित वा अधर्म युक्त लोकचाल के प्रवाह में कदापि न वहे अर्थात् जीविका होने की आशा से शास्त्रविरुद्ध लोकचाल पर कभी न चले किन्तु ( अजिह्मामशठां शुद्धां ब्राह्मणजीविकां जीवेत्) जिस का अभिप्राय किसी प्रकार की कुटिलता वा चालाकी से सम्बन्ध रखने वाला न हो तथा जो किसी द्वितीय को धोखा दे कर प्राप्त न होती हो वा जो शठ नीच प्रकृतियों के संग से प्राप्ति न हो ऐसी अपने ब्राह्मण वर्ण के किसी शुद्ध निर्दोष कर्म द्वारा सिद्ध होने वाली जीविका को करे ॥

भा०—एक के पीछे दूसरे का चलना जिस को भेड़ियाधसान भी कहते हैं। जिस बात को किसी ने किसी कारण अच्छा कहा वा माना तो उस को अच्छा कहने वा मानने वाले उस एक के अनुगामी अनेक हो जाते हैं यही प्रधान लोकपन है कि तत्व का खोज फिर नहीं करते अन्धाधुन्ध वही रटें चले जाते हैं। अर्थात् संसार के प्रवाह में पड़े संसारी लोग प्रवाह से प्रवृत्त शास्त्रविरुद्ध भी जिस मन्तव्य को अच्छा मानते हैं उसी का जो अनुमोदन करता उस की वे प्रतिष्ठा करते उस को जीविका देते हैं सामान्य कर यही लोक का प्रवाह है। तथा बहुत से लोग सुमार्ग को पकड़ने उस पर चलने का अभिमान रखने वाले भी लोकप्रवाह के पार नहीं पहुंचते। किन्तु अनेकों का नायक कोई २ कभी कहीं लोक प्रवाह से बच के निकल सकता है। जो जितना लोक प्रवाह को त्यागता है वह उतना ही अधिक केवल धर्म का संचय करता। इस से सब के लिये सब शास्त्रज्ञ लोगोंको सब काल में लोक प्रवाह से बाहर निकल के शास्त्र की आज्ञा के अनुसार चलने के लिये प्रबल उद्योग करना चाहिये ॥११॥

**संतोषं परमास्थाय सुखार्थी संयतो भवेत्।**
**संतोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥१२॥**

अ०—सुखार्थी स्नातको गृहस्थो ब्राह्मणः परमुत्कृष्टमाधिक्येन संतोषमास्थायोद्दिश्य संयतो जितेन्द्रियः प्रचुरधनार्जनादुदासीनो भवेत्। हि यतः सन्तोषएव सुखस्य मूलं नहि तृष्णाप्रवाहोर्मिपतितः सुखं लभते तस्मादेव सन्तो-

षाद्विपर्ययो दुःखमूलं तृष्णाधिक्यमेव दुःखाधिक्यस्य सर्व-त्रप्रधानं कारणमस्तीति ॥

भा०-यथासम्भवभृत्यात्मपोषणावश्यकपञ्चमहायज्ञाद्यनुष्ठानमात्रोचितान्नधनानधिकोपादित्सा गृहस्थस्य सन्तोषः नहि कोऽप्यधिकधनान्नार्जनाय धावन् शान्तः सुखी वा भवितुमर्हति । पङ्के प्रविष्टस्य निर्लिप्तत्वमिवासम्भवम्.

भावार्थः-(सुखार्थी परं संतोषमास्थाय संयतो भवेत्) स्नातक गृहस्थ ब्राह्मण अधिकता से उत्तम सन्तोष को धारण कर वा सन्तोष को ही परम उद्देश मान कर जितेन्द्रिय हो अर्थात् अधिक धन जोड़ने से उदासीन रहे (हि सन्तोषमूलं सुखं विपर्ययो दुःखमूलम्) क्योंकि सन्तोष ही सुखका मूल कारण है जो सन्तोष को त्यागता है उसे सुख नहीं मिलता और सन्तोष का त्याग-तृष्णा का बढ़ना ही सर्वत्र दुःख का मूल कारण है ॥

भा०-शक्ति वा प्राप्ति के अनुसार स्त्री पुत्रादि तथा अपने साधारण भरण पोषण के लिये जितना आवश्यक है तथा पञ्चमहायज्ञ करने के लिये जितना अन्न धन उचित आवश्यक है उतने से अधिक प्राप्ति के लिये तृष्णा न रखना गृहस्थ का सन्तोष कहाता है क्योंकि कोई अधिक अन्न धन जोड़ने के लिये भागता हुआ शान्त वा सुखी नहीं हो सकता जैसे कीचड़ में फसे हुए का न लिपना असम्भव है वैसे लोभ लालच में फसे हुए पुरुष का चित्त शुद्ध निर्दोष शान्त वा सुखयुक्त रहना असम्भव है ॥ १२ ॥

अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः।
स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत्॥

अ०-स्नातको द्विजो विप्रोऽतः सुखार्थित्वादेव षट्सु जीविकोपायेषु मध्येऽन्यतमया देशकालाद्यनुसारेण कर्त्तुमुचितयैकया कयाऽपि वृत्त्या जीवन् स्वर्ग्यायुर्यशःकराणीमानि वक्ष्यमाणानि व्रतानि धारयेत् स्वीकुर्यात् ॥

भा०—अत्र प्रकरणे सन्तोषाधिक्येन धनाद्यर्जनसंकोचो ब्राह्मणपरएव विज्ञायते यतस्तस्य तपएव धर्मं वा धनं यस्य च धनमेव धनं न तस्य तपएव धर्मएव वा धनं भवति। यद्वा यस्य तपएव धर्मएव वा धनं सएव ब्राह्मणः। कुलेन यो ब्राह्मणस्तेनान्येन च स्वब्राह्मण्यरक्षायै सन्तोषएव प्रधानीकार्यः। यो धर्मेणाधिकसुखमाप्तुमिच्छति स ब्राह्मणो यः प्रभुत्वेन सुखमिच्छत्यसौ क्षत्रियो यश्च प्रधानतया धनेन सुखमिच्छति सएव वैश्यइति। अतः सन्तोषादिवाक्यानि गौणभावेन क्षत्रियादिषु प्राधान्येन च ब्राह्मणेषु घटन्ते। यो हि वृत्त्याधिक्येन सुखाय धावति न तस्य सुखार्थित्वं सफलं सम्भवति। यश्च बहुभिर्वृत्युपायैर्जीवति नासौ भविष्यति कल्याणहेतूनि स्वर्ग्यायुर्यशांसि प्राप्तुं व्रतान्यनुष्ठातुं वा शक्तः सावकाशो वा जायते। तस्मादेकवृत्या जीवने सुखार्थित्वं पूर्वपद्योपात्तं हेतुस्तादृशं जीवनं च व्रतधारणे हेतुरिति ॥१३॥

भावार्थः—( स्नातको द्विजोऽतोऽन्यतमया वृत्त्या जीवंस्तु ) ब्रह्मचर्याश्रम को समाप्त कर गृहस्थ हुआ ब्राह्मण सुख का अभिलाषी होने के कारण पूर्व कहे जीविका के छः उपायों में से देश कालादि के अनुसार करने योग्य किसी एक प्रकार की जीविका से जीवन का निर्वाह करता हुआ ( स्वर्ग्यायुष्ययशस्यानीमानि व्रतानि धारयेत्) सुख आयु तथा यश कीर्त्ति को अधिक बढ़ाने वाले इन आगे कहे जाने वाले व्रतों नाम नियमों को धारण करे ॥

भा०—इस प्रकरण में सन्तोष की अधिकता से धनादि के जोड़ने में संकोच रखना मुख्य कर ब्राह्मण का ही काम है [ इसी कारण सामान्य कर तीन वर्ण के वाची भी द्विजपद से ब्राह्मण का ग्रहण किया गया है सो ( विप्रो जीवेदनापदि ४।२) इस अध्याय के आरम्भ में तथा ( वृत्तिर्विप्रस्य शाश्वती ४।२५९ ) इसी अध्याय के अन्त में विप्रपद से ब्राह्मणके लिये मुख्य उपदेश है यह बात ग्रन्थकार ने उपक्रमोपसंहार द्वारा स्वयमेव प्रकट करदी है ] क्योंकि ब्राह्मण

का तप वा धर्म ही मुख्य धन है और जिस का धन ही धन है उस का तप वा धर्म ही धन नहीं हो सकता अथवा जिस किसी ( वैश्य क्षत्रियादि कहाने वाले ) का भी तप और धर्म ही धन है वही ब्राह्मण कहावेगा । इस लिये जो कुल से ब्राह्मण है उस को तथा अन्य गुण कर्मानुकूल ब्राह्मण को अपने ब्राह्मणपन की रक्षा के लिये सन्तोष को ही प्रधान मानना चाहिये । जो कोई पुरुष धर्म के द्वारा अधिक सुख चाहता वह ब्राह्मण जो प्रभुता [हकूमत] द्वारा सुख की अधिक इच्छा रखता वह क्षत्रिय तथा जो मुख्य कर धन के द्वारा सुख भोगना चाहता है वही वैश्य है । इस कारण सन्तोषादि सम्बन्धी वाक्य मुख्य कर ब्राह्मणों में तथा गौणरूप से क्षत्रियादि में घटते हैं । जो अधिक जीविका करके सुख प्राप्ति के लिये भागता है उस का सुखार्थीपन सफल नहीं हो सकता । और जो बहुत जीविका के उपायों का आरम्भ करके जीवता है वह भावी समय में कल्याण के हेतु स्वर्ग अधिक आयु और उत्तम यश को प्राप्त, वा नियम व्रतों का सेवन नहीं कर सकता और उस को सुखभोग के लिये अवकाश भी नहीं मिलता है । इस लिये पूर्व श्लोक में कहा सुखार्थी होना एक वृत्ति से जीवने में हेतु और वैसे जीवन व्यतीत करना व्रत धारण में हेतु है ॥१३॥

**वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।**
**तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥१४॥**

**अ०-स्नातकः स्वकं स्ववर्णाश्रमोचितं वेदोक्तं कर्म नित्यं निरन्तरमतन्द्रितः कुर्यात् । तद्धि दीर्घकालनैरन्तर्यसत्कारासेवितं वैदिकं कर्म यथाशक्ति शक्तितोऽन्यूनं कुर्वन् परमां गतिं सर्वोत्कृष्टं निःश्रेयससुखं प्राप्नोति ॥**

**भा०-यथा सर्वत्रैव लोके शास्त्रे च साधनतारतम्येन साध्यतारतम्यसिद्धिर्जायते । अन्नेन भक्षितेन क्षुन्निवर्त्तत इत्यस्मिन्सामान्यवाक्येऽल्पेनाल्पा मध्यमेन मध्यमाऽधिकेन चाधिका तथैवात्रालस्यादिदोषत्यागपुरस्सरं दीर्घकालनैरन्तर्यसत्कारासेवितेन वेदोक्तकर्मणा परमगतिः सम्भवति ।**

अल्पकालादिसेवितेन चाल्पैव सुखावाप्तिरिति । ज्ञानेनैव मुक्तिरिति सिद्धान्ते सत्त्वशुद्धिद्वारा ज्ञानेन मोक्षे सति नास्ति बाधः । तदुक्तं महाभारतमोक्षधर्मपर्वणि—"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । तदा दर्शतलप्रख्ये पश्यत्यात्मानमात्मनि" ॥ १४ ॥

भावार्थः—( स्वकं वेदोदितं कर्म नित्यमतन्द्रितः कुर्यात् ) गृहस्थ ब्राह्मण वेद में कहे अपने वर्ण वा आश्रमानुकूल कर्म को नित्य निरन्तर निरालस्य होके करे ( तद्धि यथाशक्ति कुर्वन् परमां गतिं प्राप्नोति ) अधिक काल तक श्रद्धा के साथ निरन्तर उस वेदोक्त यज्ञादि कर्म को अपनी शक्ति भर करता हुआ परमगति नाम सर्वोत्तम मोक्ष सुख को प्राप्त हो जाता है ॥

भा०—जैसे लोक वा शास्त्र में सर्वत्र ही साधनों के उत्तम मध्यम प्रबल निर्बल वा न्यूनाधिक होने से वैसी ही न्यूनाधिक कार्यों की सिद्धि होती है । अन्न खाने से क्षुधा निवृत्त होती इस सामान्य वाक्य में इतना ऊपर से जोड़ के समझना उचित होता है कि थोड़े से थोड़ी मध्यम से मध्यम और अधिक अन्नसे अधिक क्षुधा निवृत्त हो सकती है । वैसे यहां भी आलस्यादि दोषों के त्याग पूर्वक बहुत काल तक श्रद्धा के साथ निरन्तर सेवन किये वेदोक्त कर्म से मुक्ति हो सकती है और थोड़े कालादि से सेवन किये वेदोक्त कर्म से थोड़ी ही सुख प्राप्ति होती वा हो सकती है । ज्ञान से ही मुक्ति होती इस सिद्धान्त में सत्त्वशुद्धि द्वारा हुए ज्ञान से मुक्ति होती है ऐसा मानने पर कोई बाधा नहीं है । सो महाभारत शान्तिपर्वान्तर्गत मोक्षधर्ममें कहा है कि "मलिनता कुसंस्कार वा दुर्वासनारूप पाप कर्म के शुभ कर्मों द्वारा क्षीणहोने से शुद्ध दर्पण में ठीक स्वरूप दीख पड़ने के समान अपने अन्तःकरण में परमात्मा को देखता है" ॥ १४ ॥

**नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्मणा ।**
**न विद्यमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः ॥१५॥**

अ०—धर्मकृत्यं विस्मृत्य धनाद्यासक्त्याऽर्थानुपार्जितुं नेहेत । विरुद्धेन धर्मविरोधिनिषिद्धप्रतिग्रहादिनार्थान्नेहेत ।

विद्यमानेषु निर्वाहमात्रमुपस्थितेष्वन्नधनादिषु चार्थान्नेहेत आर्त्यामप्यन्नमन्तरेण कष्टे सत्यपि यतस्ततः पतितादेर्नेहेत

भा०-प्रसङ्गादिना धनाद्यर्जने धर्महानिरधर्मप्राप्तिर्वोभयं वा सम्भवति। तस्मादासक्त्यादीन् विहाय वृत्तिमाचरेत्॥१५

भाषार्थः-(प्रसङ्गेनार्थान्नेहेत) धर्म को भुला कर और धनादि में आसक्त हो धनोपार्जन की चेष्टा न करे (न विरुद्धेन कर्मणा) धर्म से विरुद्ध निषिद्ध दान आदि कर्म के द्वारा भी धन संग्रह की चेष्टा न करे (न विद्यमानेष्वर्थेषु) निर्वाहमात्र के लिये अन्न धनादि के उपस्थित होने पर भी लोभ से अधिक धन की चेष्टा न करे (नार्त्यामपि यतस्ततः) अन्न प्राप्ति के विना कष्ट होने पर भी जिस किसी पतित वा अतिनीचादि से अन्नादि लेने की चेष्टा न करे॥

भा०-धनादि में आसक्ति आदि के द्वारा धनादि के उपार्जन में धर्म की हानि, अधर्म की प्राप्ति वा दोनों होनी सम्भव हैं इस लिये अधिक लालच वा फसाव आदि को छोड़ के गृहस्थ जीविका करे॥ १५॥

**इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः।**
**अतिप्रसक्तिं चैतेषां मनसा संनिवर्त्तयेत्॥**

अ०-सर्वेषु शब्दस्पर्शरूपरसगन्धविसर्गानन्दादानभ्रमणभाषणेष्विन्द्रियाणामर्थेषु विषयेषु कामतो रागेण भोगोत्कण्ठया न प्रवर्त्तेत। एतेषामिन्द्रियाणां विषयेष्वतिप्रसक्तिं मनसा मानसविचारेण दोषदर्शनपुरस्सरं सम्यङ्निवर्त्तयेत्॥

भा०-स्वभार्य्यागमनादीनि गृहस्थेन कर्त्तव्यान्यपि कर्माणि "ऋतौ भार्यामुपेयात्" इत्यादिप्रेरणालक्षणधर्ममत्यैव धर्ममिच्छता गृहस्थेन कार्याणि न त्वनुरागतः। एवं हि धर्मो ज्ञातुं सेवितुं च शक्यते नान्यथा॥ १६॥

भाषार्थः-( सर्वेष्विन्द्रियार्थेषु कामतो न प्रसज्यते ) शब्द स्पर्श रूप रस गन्ध इन ज्ञानेन्द्रियों के पांच विषयों में तथा गुदा के त्याग, उपस्थ के आनन्द, हा

के लेने, पगों के भूषण और वाणी के भाषण विषयों में रागपूर्वक भोग की उत्कण्ठा से गृहस्थ आसक्त न हो ( एतेषामतिप्रसक्तिं मनसा संनिवर्त्तयेत् ) इन इन्द्रियों की विषयों में होने वाली अत्यन्त फसावट को मानस विचार से दोष देखने पूर्वक सम्यक् रोकता रहे । इन सब में कामासक्ति सब का मूल है उस को सम्हालने से अन्य विषयों में फसावट होना कम सम्भव है। अति फसावट यही है कि जिस से धर्म कर्म सब भूल जाता दिनरात उन्हीं विचारों में लगा रहता है। अति का निषेध करने से कुछ फसावट तो गृहस्थ होने से होती ही है यह जताया है इसी कारण सर्वथा फसावट छुड़ाने के लिये वानप्रस्थादि अगले आश्रम हैं॥

भा०—स्वस्त्रीगमनादि गृहस्थ के कर्त्तव्य काम भी धर्मबुद्धि से ही धर्मोपार्जन की इच्छा रखता हुआ गृहस्थ करे किन्तु स्नेह वा राग में फस के नहीं ऐसा करने पर ही धर्म का ज्ञान और सेवन मनुष्य कर सकता है अन्यथा नहीं ॥१६॥

**सर्वान् परित्यजेदर्थान्स्वाध्यायस्य विरोधिनः।**
**यथातथा ध्यापयंस्तु साह्यस्य कृतकृत्यता ॥१७॥**

अ०—वेदाध्ययनाध्यापनरूपस्य प्रधानधर्मस्य विरोधिनो विघ्नरूपान्सर्वानर्थान्कर्त्तव्यत्वेनोपदिष्टानपि वृत्त्युपायादीन् परित्यजेत्सर्वथैव जह्यात् । योहि यथातथा कष्टेनापि स्वस्य, कुटुम्बस्य पुत्रकलत्रादेश्च निर्वाहं कुर्वन् स्वाध्यायरूपं परमं धर्मं न जहाति साह्यस्य कृतकृत्यताऽस्ति ॥

भा०—वेदस्याध्ययनमध्यापनं श्रवणं श्रावणं च सर्वद्विजार्याणां परमो धर्मो योहि सांसारिकसुखलिप्सया तत्र विघ्नं करोति स स्वस्यैव भावि महत् कल्याणं निहन्ति ॥१७॥

भाषार्थः-(स्वाध्यायस्य विरोधिनः सर्वानर्थान् परित्यजेत्) वेद के पढ़ने पढ़ाने वेदोक्त धर्म के उपदेश रूप परमधर्म के विरोधी उस धर्म में विघ्न करने वाले अन्य धनोपार्जनादि कर्त्तव्यता से कहे कामों को भी सर्वथा ही छोड़ देवे जो पुरुष (यथातथा यापयंस्तु) जिस किसी प्रकार अपना वा स्त्री पुत्रादि का कष्ट से भी निर्वाह करता हुआ परमधर्म को नहीं छोड़ता ( साह्यस्य कृतकृत्यता ) सो

ही गृहस्थ ब्राह्मण का कृतार्थ हो जाता है। और धर्म कर लेना ही मुख्य क
वर्त्तमान में भी अधिक सुख का हेतु है ॥

भा०—वेद का पढना पढ़ाना सुनना सुनाना ही ब्राह्मणादि द्विज आर्यों
परमधर्म है जो पुरुष संसारी सुख भोग के लालच से उस परमधर्म में विघ्न
रता है वह अपने ही होने वाले महत् सुख का नाश करता अर्थात् अपने पा
में कुल्हाड़ी मार कर आप ही पीड़ित दुःखित होता है ॥१७॥

**वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च।**
**वेषवाग्बुद्धिसारूप्यमाचरन्विचरेदिह ॥१८॥**

अ०-वयसो यौवनादेः कर्मणोऽध्यापनादेरर्थस्य धनस्य
श्रुतस्य विद्वत्त्वस्याभिजनस्य कुलीनत्वस्य च वेषवाग्बुद्धि
सारूप्यमाचरन्निह जगति विचरेत्। वेषादिसारूप्यस्य
प्रत्येकेन वयआदिना सम्बन्धो योजनीयः ॥

भा०-वयआदिना वेषादिसारूप्यस्य लोकैरभिमतत्वाद्
द्वेषाद्यभावेन सुखहेतुत्वाद् धर्मेण युज्यते तस्मात्तादृशमे
वाचरणं धर्मानुकूलं विज्ञेयम् ॥ १८ ॥

भावार्थः—(वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च) यौवन वृद्ध वा बा
की अवस्था, अध्यापन वा याजनादि प्रधान कर्म, अर्थ-धन, शास्त्र में प्रवेश औ
कुलीनता ये सब जिन २ (वेषवाग्बुद्धिसारूप्यमाचरन्निह विचरेत्) भेष, वाणी औ
बुद्धियों के चिह्नों से प्रकट हों वैसा ही वेषादि रखता हुआ इस जगत् में गृहस्था
पुरुष विचरे ॥

भा०—यह कथन गृहस्थ से भिन्न के लिये भी सामान्य धर्म है। अवस्था
के साथ अनुकूल वेषादि का होना लोगों को अच्छा लगने से किसी से द्वेषादि
हो कर सुख का हेतु होने से धर्म का साथी होता इस से वैसा ही आचरण कर
धर्मानुकूल जानो अर्थात् युवावस्था में वृद्धों का सा वेष, वृद्ध की सी, वाणी, वा बु
रखना धर्म से विरुद्ध है तथा निर्धन होकर धनी का सा और धनी हो कर द
का सा वेष वाणी वा बुद्धि रक्खे तो यह भी धर्म से विरुद्ध काम है। क्योंकि उ
चित से विपरीत वर्त्ताव ही अधर्म है ॥ १८ ॥

**बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ॥**
**नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥**

अ०-वेदाविरुद्धानि सद्यः शुभबुद्धिवर्धकानि धन्यानि धनाय हितान्यर्थवेदाभिमुखानि हितान्यायुर्वेदादीनि च शास्त्राणि वेदार्थज्ञापकान् ब्राह्मणादिनिगमग्रन्थांश्च नित्यं स्नातकः प्रयत्नेन यथाकालं यथावकाशं चावेक्षेत ॥

भा०-नित्यं सच्छास्त्रावलोकनेन कर्त्तव्ये मनः समाधीयते तेन हृदि धर्मः सदैवोपचीयते ॥ १९ ॥

भावार्थः—(आशु बुद्धिवृद्धिकराणि) शीघ्र ही अच्छे शुभ विचार को बढ़ाने (धन्यानि च हितानि च) अर्थवेद से संबन्ध रखने वाले जिन के अवलोकन से धर्मानुकूल धन प्राप्त कर सके तथा आयुर्वेद सम्बन्धी ग्रन्थ जिन से आरोग्यता द्वारा हित हो सके ऐसे (शास्त्राणि) शास्त्रों (च) और (वैदिकानेव निगमान्) वेद के आशय में निरन्तर प्रवेश कराने वाले वेद ही के व्याख्यानरूप ब्राह्मणादि ग्रन्थों को गृहस्थ (नित्यमवेक्षेत) नित्य २ देखा शोचा विचारा करे जिस से अभ्युदय निःश्रेयस की सिद्धि सुगम हो ॥

भा०—नित्य २ सत् शास्त्रों के अवलोकन से कर्त्तव्य में मन ठीक अचल-स्थिर होता जाता है । चक्र में घुमाने वाले सन्देह मिटते जाते हैं जिस से हृदय में धर्म का सदा संचय होता है ॥ १९ ॥

**यथायथा हि पुरुषः शास्त्रं समधिगच्छति ।**
**तथातथा विजानाति विज्ञानं चास्य रोचते ॥**

[ शास्त्रस्य पारं गत्वा तु भूयोभूयस्तदभ्यसेत् ।
तच्छास्त्रं शबलं कुर्यान्नचाधीत्य त्यजेत्पुनः ॥१॥ ]

अ०-पुरुषो यथायथा शास्त्रं सम्यगधिगच्छत्यभ्यस्यति

तथातथा तस्य मर्म विशेषेण जानाति विज्ञानं चास्य रो
चते उज्ज्वलं प्रकाशितं भवति ॥

भा०-यद्यपि केचिज्जन्मान्तरीयशुद्धसंस्कारिणोऽल्पा
भ्यासेनैव शास्त्रस्य यावन् मर्म विजानन्ति न तावन्मलिन
संस्कारा दीर्घकालाभ्यासेनापि जानन्ति तथापि स्वल्पा
भ्यासापेक्षया वेदादिशास्त्रस्याधिकाभ्यासः सर्वस्यैव विज्ञा
नवर्धकः । रुचेरत्र रुच्यर्थाभावादेव सम्प्रदानसंज्ञाभावः ॥२०

भाषार्थः-( पुरुषो यथायथा हि शास्त्रं समधिगच्छति ) गृहस्थादि पुरुष जैसा
ही शास्त्र का वार २ अभ्यास करता उस के अभिप्राय को हृदय में बैठाता है (त
थातथा विजानाति ) वैसा २ उस का विशेष ज्ञान होता उस के मर्म को जानत
जाता (च) और ( विज्ञानमस्य रोचते ) इस को शास्त्र का बोध प्रसन्नता बढ़ा
वाला होता क्योंकि उज्ज्वल शुद्ध निर्विकल्प बोध ही रुचि कहाता है ॥ [इसी
आगे किसी २ पुस्तक में (शास्त्रस्य०) यह एक श्लोक और भी मिलता है जिसका अ
है कि-किसी शास्त्र को आद्योपान्त पढ़के वार २ उसका अभ्यास आवृत्ति पाराय
करे तो उसका ठीक शुद्ध बोध निर्मल ज्ञान हो सकता है किन्तु गुरुमुख से पढ़
के उसका अभ्यास छोड़ न देवे ] ॥

भा०-यद्यपि जन्मान्तर के अति शुद्ध संस्कारी कोई लोग थोड़ा अभ्यास करने
भी शास्त्र का जितना मर्म जान लेते हैं, मलिन संस्कारी बहुत काल के अभ्यास से
उतना मर्म नहीं जान पाते। तथापि थोड़े २ अभ्यास की अपेक्षा से वेदादि शा
का अधिक २ अभ्यास सभी के लिये विशेष ज्ञान का बढ़ाने वाला माना ज
यगा रुचि शब्द का अर्थ यहां निर्मलता है किन्तु अभिलाषा नहीं है ॥ २० ॥

**ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा ।**
**नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् ॥२१॥**

अ०-सर्वदा ऋषियज्ञं-ब्रह्मयज्ञं,देवयज्ञं-होमं,भूतयज्ञं
वैश्वदेवं,नृयज्ञमतिथिपूजनं,पितृयज्ञं-पितृपदवाच्यानां वि
प्राणां श्राद्धेन पूजनं यथाशक्ति न हापयेत्त्यजेत् ॥

भा०—विहितानामपि पञ्चयज्ञानां पुनरुपादानमुत्तरार्थं तेनोक्तप्रकारेण वक्ष्यमाणप्रकारेण वा कार्या एव । रोगादिना कर्त्तुमशक्तदशां विहायान्यदा न त्याज्याइत्याशयः ॥

भावार्थः—( ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा ) सन्ध्योपासन वेदाध्ययन, अग्निहोत्र, वैश्वदेव, ( नृयज्ञं पितृयज्ञं च ) अतिथिपूजन, पितृयज्ञ पितृपद्वाच्य ब्राह्मणों का श्राद्ध द्वारा पूजन इन पञ्च महायज्ञों को गृहस्थ सदा करे ( यथाशक्ति न हापयेत् ) यथाशक्ति कभी न त्यागे अर्थात् साधारण रोगों में भी जब तक शरीर में शक्ति रहे तब तक करता ही रहे ॥

भा०—पञ्चमहायज्ञों के नित्य करने की आज्ञा गृहस्थ के लिये पूर्व आ चुकी थी तो भी आगे विशेष व्याख्यान दिखाने के लिये फिर कहते हैं । इस से उक्त प्रकार अथवा आगे कही रीति से किसी प्रकार अवश्य करना दिखाया है । रोगादि के कारण अशक्त दशा को छोड़ कर अन्य समय कभी कोई मरण पर्यन्त भी न छोड़े । संन्यास आश्रम में केवल महायज्ञों का प्रकार बदल जाता है ॥ २१ ॥

**एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः ।**
**अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥**
**वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्वदा ।**
**वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम् ॥**
**ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा ।**
**ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा**
**॥ २२—२४ ॥**

अ०—यज्ञशास्त्रतत्त्वज्ञाः केचिद्बहिरङ्गप्रकारेण महायज्ञानुष्ठानमनीहमाना अकुर्वाणा एतान् महायज्ञान्सततमिन्द्रियेष्वेव जुह्वति । केचिद्वाचि वेदाध्यापनोपदेशाध्ययनज-

म ही धर्म है। व्याज लेके जीविका करना वैश्य का धर्म है। जिस शूद्र जीविका करने वाले में श्रद्धा होती वह श्रद्धारहित नास्तिक के तुल्य वेदज्ञ ब्राह्मण से भी वड़ा वा श्रेष्ठ है इस प्रकार केवल शास्त्र का बोधमात्र होने की पेक्षा दानादि धर्म के सेवन की श्रेष्ठता और प्रधानता है यह सिद्धान्त जानो॥

**श्रद्धयेष्टं चपूर्त्तं च नित्यं कुर्यादतन्द्रितः।**
**श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥२२६॥**

अ०-इष्टं श्रौतं दर्शपौर्णमासादियागं, पूर्त्तं दानधर्मादिकं सर्वं धर्म्यं कर्मातन्द्रितः श्रद्धया नित्यं कुर्यात् स्वागतैर्धर्म्योपायेनागतैर्धनैः श्रद्धया कृते ते कर्मणी अक्षये भवतः सम्यक् चेतसि योगात् ॥

भा०-यत्किमपि निरन्तरमविचलं स्थाप्यते तदेव चिरस्थायि सद्बहुकालावधि शुभफलं प्रयच्छति। यच्च श्रद्धारहितेनान्यमनस्केन किमपि क्रियते तच्च संस्कारवासनादिरूपेण न चिरं दृढं तिष्ठति कुतः पुनः फलं प्रयच्छेत् ॥२२६॥

भाषार्थः-(अतन्द्रितः) निरालस हुआ गृहस्थ पुरुष (इष्टं च पूर्त्तं च नित्यं श्रद्धया कुर्यात्) दर्शपौर्णमासादि श्रौत कर्म और दान धर्मादि स्मार्त्त सब धर्मानुकूल कर्म नित्य ही श्रद्धा के साथ लग के करे (हि स्वागतैर्धनैस्ते श्रद्धाकृते अक्षये भवतः) क्योंकि धर्मानुकूल उपाय से उपार्जन किये अन्न धनादि से श्रद्धा के साथ किये वे दोनों प्रकार के कर्म चित्त के साथ ठीक मेल करलेने से चिरस्थायी दीर्घकाल तक फल देने वाले होते हैं॥

भा०- जो कुछ निरन्तर तथा दृढ़ता से स्थापित किया जाता है वही चिरस्थायी हुआ बहुत काल तक शुभ फल देता है। और जो श्रद्धा रहित अन्य मन लगाने वाला कुछ काम करता है वह संस्कार वासनादिरूप से चिर काल तक दृढ़ता से नहीं ठहरता तब फल कहां से देवे ! ॥ २२६ ॥

**दानधर्मं निषेवेत नित्यमैष्टिपौर्त्तिकम्।**
**परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥**

[पात्रभूतोहियोविप्रः प्रतिगृह्यप्रतिग्रहम् ।
असत्सुविनियुञ्जीत तस्मैदेयंनकिञ्चन ॥१॥
संचयंकुरुतेयस्तु प्रतिगृह्यसमन्ततः ।
धर्मार्थंनोपयुङ्क्तेच नतंतस्करमर्चयेत् ॥२॥]

यत्किंचिदपिदातव्यं याचितेनानसूयया ।
उत्पत्स्यतेहितत्पात्रं यत्तारयतिसर्वतः ॥
वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदःप्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥
भूमिदोभूमिमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणिवेश्मानि रूप्यदोरूपमुत्तमम् ॥
वासोदश्चन्द्रसालोक्य–मश्विसालोक्यमश्वदः ।
अनडुहःश्रियंपुष्टां गोदोब्रध्नस्यविष्टपम् ॥
यानशय्याप्रदोभार्य्या–मैश्वर्यमभयप्रदः ।
धान्यदःशाश्वतंसौख्यं--ब्रह्मदोब्रह्मसार्ष्टिताम
सर्वेषामेवदानानां–ब्रह्मदानंविशिष्यते ।
वार्यन्नगोमहीवास--स्तिलकाञ्चनसर्पिषाम् ॥
येनयेनतुभावेन--यद्यद्दानंप्रयच्छति ।
तत्तत्तेनैवभावेन–प्राप्नोतिप्रतिपूजितः ॥२३४॥

अ०—ऐहिकमिष्टिसंबद्धं दानधर्मं पौर्त्तिकं च ततोऽन्य-त्रापि स्नातकः परितुष्टेन भावेन शक्तितो यथाशक्ति नित्यं

सेवेत । अत्रैव पद्यद्वयं पश्चात्केनापि धृतम् (पात्रभूत०) इ-
त्यादिकमुपलभ्यते । यत्किञ्चिदन्नवसनादिकं याचितेनानसू-
यया श्रद्धयैव दातव्यम् । तच्च धर्मरूपं दानं दीर्घकालनैरन्त-
र्यसत्कारासेवितं दृढतरं बद्धमूलं सत् पात्रं पालकमेवोप-
स्यते यत्सर्वतो दुःखसागरात्तारयति । उदकादीनां दानशी-
लस्तस्यतस्य समुचितमेव तृप्त्यादिकं फलमाप्नोतीति स-
र्वत्र योज्यम् । येनयेन भावेन सत्त्वादिस्थेन चेतसा यद्यद्
दाति तेनतेन भावेन तादृशेनैव चित्तेन तत्तत्फलमाप्नोति।

भा०-अत्र सार्द्धैकपद्ये विधिः शेषे चार्थवादाः । त्रयं
धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति । तस्य दानस्य च गृहा-
श्रमे प्राधान्यमन्यत्र देयवस्तुसंग्रहाभावात् । वारिणि पीते
तृप्तिरेव जायते तेन पिपासयाऽपीडनमेवोदकदानस्य प्रधा-
नं फलं तृप्तिरेव । अन्नस्योपयोगात्क्षुधार्त्तस्य यः परः प्र-
सादस्तत्रैव विशेषेण सुखपदस्य व्यवहारः । सुखायैव सर्वे
प्राणिनोऽहर्निशं यतन्ते । विशिष्टं च सुखमन्नाधीनमिति
कृत्वाऽन्यापेक्षयाऽन्नाप्तयएवाधिक्येन सर्वे धावन्ति । अत
एव व्यतिरेकेऽन्नाभावे यादृशं दुःखं न तादृशमन्यालाभे के-
मन्यन्ते । भुक्तमन्नं च रसादिधातुरूपेण परिणतं सद्यावज्
ज्जीवं शरीराङ्गं भूत्वा तिष्ठतीदमेवान्नस्याक्षय्यं सौख्यं फ-
लमवसेयम् । तिलेषु च प्रजननशक्तिः प्रधाना यत्र वामा-
नामृतुकालो निरुध्यते सन्तत्यभावश्च दृश्यते तत्रायुर्वेदिका-
स्त्रियास्तिलखादनमादिशन्ति । तिलखादनेनार्त्तवं प्रवर्त्तते
सन्तानोत्पत्तिश्च तदा सम्भवत्येव मात्राबोधस्तु दाने खा-

दनादौ च सर्वत्रैव कार्यएव । स्नेहप्रधानास्तिलाः स्निग्धं प्रियं चापत्यं सर्वस्येष्टम् । सर्वत्रैव सति कारणे कार्यमुत्पद्यते तिलाश्चान्यापेक्षया सन्ततेः प्रधानं कारणम् । दृश्यदर्शने प्रदीपोऽङ्गमतएव केवलेन चक्षुषा प्रदीपेन वा रूपं नोपलभ्यते । सूर्यादयश्च योगार्थेन भवन्त्येव प्रदीपपदवाच्यास्तेन यः प्रकाशं दर्शनाङ्गं ददाति स प्रकाशमेव लभते यथा गालिप्रदातारोऽन्येभ्यो गालिमेवाप्नुवन्ति प्रियवादिनश्च प्रियमेव शृण्वन्त्यन्येभ्यः । हिरण्यं चायुषो बर्द्धकमायुर्वेदे प्रसिद्धम् । "वचाघृतं सुवर्णं च विल्वचूर्णमिति त्रयम् । मेध्यमायुष्यमारोग्यं पुष्टिसौभाग्यवर्द्धनम् ॥" यथा कूपो जलं ददाति तत्रान्यमुदकमितस्तत आगत्य संचीयते तथैव यो यद्ददाति तदभ्याशे तदेवाधिक्येनायाति स तदेवाकर्षति च संसर्गश्च तेन सह तस्याधिकएव जायते संसर्गेण च तत्तद्गुणाः सङ्गिन्याविशन्त्येव । येन यस्मै यद्दीयते स स्वभावेनैव तस्मै तदेव दातुमुत्सहते । यथा कृषिजीविनो वपनकाले पृथिव्या अन्नं ददति सा च ततोऽधिकतरं तदेवान्नमुत्पाद्य ददाति कृषीवलाय, एवं च यो जनः कमपि प्रियं यादृशमन्नं भोजयति स तादृशमेव स्वस्य भोजयितारं भोजयितुं मनः कुरुतइति चराचरे संसारे नियमएव दृश्यते । तद्वदत्रापि सुवर्णदात्रे सुवर्णमेवेह जन्मान्तरे चान्ये सूक्ष्मसंस्कारसंस्कृता ददति । रूपप्राधान्यादेव रूप्यत्वम् । चन्द्रमसि च यद्रूपं तच्च मुख्यं रूपपदवाच्यम् । अतएव चन्द्रमुखीणामेवाधिक्येन रूपवतीत्वं कवयो भणन्ति । चन्द्ररूपं सोमतत्त्वमेव

रूप्ये मुद्राख्येऽपि प्रधानमतः सामान्येन रूपप्रधानवस्तुप्र नशीलो दातोत्तमं रूपमाप्नोति। वाससां शुक्लत्वं प्रधानं स्वा भाविकं कर्पासतूलजत्वादेव। शुक्लत्वं च सोमस्यैवैकान्तिको गुणोऽतस्तादृशशीलश्चन्द्रलोकसुखमश्नुते। अश्वदश्चाश्वस्य वत्वाद्वन्द्वप्रधानत्वात्तल्लोकजं सुखं परत्राप्नोति। अनडुहि ण्यरूपा पुष्टिः प्रधाना श्रीष्मान्नाद्युत्पादनद्वारेण। गोद गवि सूर्यतत्त्वप्रधानत्वात्तादृशलोकसुखं सोऽश्नुते। ब्रह्मदो दस्याध्यापकः स्वयमन्येन वा ब्रह्मणः समान-सृष्टितां ग शुद्धत्वमुक्तत्वादिरूपमाप्नोति। ब्रह्मदानस्यैव सर्वदुःखम त्राद्विमुक्तिः सर्वस्मादुत्तमं फलमतोऽन्यदानापेक्षया ब्रह्मदा विशिष्टमवगन्तव्यम्। येनयेन दृढेन शुद्धेन, मध्यमेनाधमे वा सत्त्वादिगुणस्थेन चेतसा दाता यद्वस्तु ददाति त तादृशमेवोत्तमं मध्यममधमं वा फलमवसेयम्। मात्राव धः संसर्गजन्यफलावाप्तिश्च पूर्ववदत्र सर्वत्रैव धर्मशास्त्रत जिज्ञासुभिर्योज्या ॥ २३४ ॥

भावार्थः-(ऐष्टिकपौर्त्तिकम्) इष्टि यज्ञ वा होमसम्बन्धी और सदावर्त्त गाने आदि द्वारा अन्न, जल धन वस्त्रादि के (दानधर्मम्) दान धर्म का ( रितुष्टेन भावेन) शुद्ध सन्तुष्ट चित्त से (पात्रमासाद्य शक्तितो नित्यं निषेवेत) सुपात्र को अन्वेषण द्वारा प्राप्त कर यथाशक्ति स्नातक गृहस्थ नित्य सेवन करे इसी के आगे दो श्लोक पीछे किसी ने प्रक्षिप्त किये हैं जिनका अर्थः-[ (यो विप्रः पात्रभूतः प्रतिग्रहं प्रतिगृह्य) जो ब्राह्मण सुपात्र होने पर भी दान कर (असत्सु विनियुञ्जीत) निकृष्ट मनुष्यों को देवे वा नीच कामों में ल (तस्मै देयं न किञ्चन) ऐसे पुरुष को दान कुछ भी कभी न देवे। (यस्तु समन्त प्रतिगृह्य संचयं कुरुते) जो पुरुष सब प्रकार सब किसी नीच ऊंच से दान ले

धनादि पदार्थ जोड़ता है (धर्मार्थं च नोपयुङ्क्ते) और दान लिये हुए धनादि को धर्म कार्यों में नहीं लगाता ( तं तस्करं नार्चयेत् ) उस चोर सुपात्र विद्वान् का भी दान द्वारा पूजन न करे ] ( याचितेन यत्किञ्चिदप्यनसूयया दातव्यम् ) किसी अन्य ब्राह्मण सुपात्र के मांगने पर जो कुछ समीप हो उस में से थोड़ा भी अन्न वस्त्रादि अपमान न कर के प्रसन्नता के साथ आदर से देवे किन्तु दयाहीन बन के सर्वथा नकार न करे (तत्पात्रं ह्युत्पत्स्यते) वह दीर्घकाल तक निरन्तर सत्कार से सेवन किया थोड़ा २ भी दानधर्म दाता का रक्षक पालक भविष्यत् में शुभफल रूप से अवश्य प्रकट होगा ( यत्सर्वतस्तारयति ) जो सब ओर से आनेवाले दुःख सागर से पार कर देता है ( वारिदस्तृप्तिमाप्नोति ) प्याऊ आदि द्वारा जल का दान करने वाला जल से होने वाली तृप्ति को प्राप्त होता (अन्नदोऽक्षय्यं सुखम् ) अन्न नाम बने पके भोजन वा आटा सीधादि का प्रायः दान देनेवाला अविनाशी सुख को पाता ( तिलप्रदः इष्टां प्रजाम् ) तिलों का दान बार २ देने वाला अभीष्ट सन्तानों को ( दीपदश्चक्षुरुत्तमम् ) दीपकादि के प्रकाश द्वारा अनेकों को सुख पहुंचाने वाला उत्तम चक्षु को (भूमिदो भूमिमाप्नोति) भूमि को देने वा ठहरने के लिये धर्मशालादि बनवाने वाला भूमि को वा अच्छे २ स्थानों ठाहरों को प्राप्त होता है ( हिरण्यदो दीर्घमायुः ) सुवर्ण का दान देनेवाला दीर्घायु को पाता ( गृहदोऽग्र्याणि वेश्मानि ) घरों का दान करनेवाला उत्तम २ घरों महलों को पाता ( रूप्यदः उत्तमं रूपम् ) रुपयों का दान करने वाला उत्तम रूप को प्राप्त होता ( वासोदश्चन्द्रसालोक्यम् ) वस्त्रों का दान करने वाला चन्द्र लोक सम्बन्धी सुख को प्राप्त होता ( अश्विसालोक्यमश्वदः ) घोड़ों का दान करने वाला सूर्यचन्द्रमा, स्वर्ग पृथिवी, वा दिन रात्रि आदि दो २ के दोनों सुखों को साथ ही प्राप्त होता (अनडुहः पुष्टां श्रियम् ) बैलों का दान करने वाला पुष्ट दृढ़ स्थायिनी लक्ष्मी वा शोभा को ( गोदो ब्रध्नस्य विष्टपम् ) गौ का दान करने वाला सूर्य लोक के सुख को प्राप्त होता ( यानशय्याप्रदो भार्याम् ) सवारी रथ आदि तथा उत्तम खट्वादि शय्या का दान करने वाला उत्तम स्त्री को प्राप्त होता ( अभयप्रदऐश्वर्यम् ) अभय दान देने वाला ऐश्वर्य को पाता (धान्यदः शाश्वतं सौख्यम्) दानेरूप धान्यान्न का राशि आदिरूप से दान करने वाला निरन्तर सनातन सुख को (ब्रह्मदो ब्रह्मसार्ष्टिताम्) ब्रह्म नाम वेद का निष्कारण दान देने सम्यक् पढ़ाने सत्य २ वेदाशय का उपदेश करनेवाला पुरुष परमात्मा के तुल्य शुद्धबुद्धमुक्तरूप होता है (सर्वेषामेव दानानां वार्य-

गोमहीवासस्तिलकाञ्चनसर्पिषाम्, ब्रह्मदा • विशिष्यते) पूर्व कहे जल अन्न, वस्त्र, तिल, सुवर्ण, घृत आदि वस्तुओं के सब दानों में वेदविद्या का दान सब उत्तम है (येनयेन तु भावेन यद्यद्दानं प्रयच्छति) जिस २ प्रकार की भावना वि चार वा चित्त से जिस २ वस्तु का दान गृहस्थ देता है ( तत्तत्तेनैव भावेन प्र प्नोति प्रतिपूजितः ) उस २ को उसी भाव से सत्कार पूर्वक प्राप्त हो जाता है।

भा०-यहां डेढ़ श्लोक में विधिवाक्य और शेष पद्यों में दान संबन्धी प्रशं रूप अर्थवाद हैं। छान्दोग्यब्राह्मणोपनिषद् में लिखा है कि "यज्ञ, वेदाध्ययन, दान देना ये मुख्य कर धर्म के तीन बड़े २ भाग हैं" और उस दान धर्म की हाश्रम में प्रधानता इस से है कि अन्याश्रम में देने योग्य अन्न धनादि वस्तु का संग्रह ही नहीं होता। जल की प्यास लगी हो तब जल के पीने वा मि पर जो सुख होता वही तृप्ति कहाती है । इस कारण जल मिलने के वि पीड़ित न होना ही जल दान का प्रधान फल तृप्ति ही है । जल का दान रने वाले के समीप जल का आवागमन अवश्य ही रहेगा और समीप रहने उस के अभाव में होने वाला दुःख भी उस को न होगा। तथा जल देने के भाव वाले को अन्य लोग भी जल के द्वारा ही तृप्त करने की चेष्टा स्वयमेव गे यह एक स्वाभाविक नियम है । क्षुधार्त्त-भूख से दुःखित पुरुषको अन्न मि ने से जो अधिक प्रसन्नता होती है उसी में विशेष कर सुख पद का व्यवहार होता है। सुख के लिये ही सब प्राणी दिन रात प्रयत्न करते हैं और सुखका अधिक भा अन्न के आधीन है ऐसा मानकर अन्य वस्तु प्राप्त करने की अपेक्षा अन्नप्राप्ति लिये ही अधिकता से सब प्राणी वा अप्राणी दौड़ते वा चेष्टा करते हैं। इ कारण अन्न के न मिलने पर जैसा दुःख प्राणियों को होता वा वे मानते हैं वै अन्य वस्तु के न मिलने पर नहीं मानते। और खाया हुआ अन्न रसादि धातु के रूप से परिणाम को प्राप्त हुआ शरीर का भाग बन के जीवन पर्यन्त ठहर है यही अन्न का अक्षय सुख फल होना जानो । और तिलों में प्रजनन श मुख्य है । इसी से जहां स्त्रियों का ऋतुमती होना रुकता है और इसी से न्तान भी नहीं होते वहां सुश्रुतादि आयुर्वेदी लोग स्त्री को तिल खिलाने आज्ञा देते हैं । प्रधान चिकित्सा ग्रन्थों में ऐसा लेख स्पष्ट मिलता है । ति खिलाने से ऋतुकाल होता यह अनुभूत विषय है और तब ऋतुकाल होने सन्तानोत्पत्ति भी प्रायः अन्य किसी प्रबल रुकावट के न होने पर होती है । परन्तु दान देने और तिल खाने आदि प्रत्येक काम में मात्रा का बोध

होना ही चाहिये । जैसे पैसा भर अन्न का खाना भी कुछ भी न खाने की अपेक्षा खाना माना जायगा । परन्तु सेर भर खाने वाले को पैसा भर अन्न इतनी क्षुधा की शान्ति करेगा जो न खाया माना जाय । इसी के अनुसार तिलों का थोड़ा कभी कहीं दान और कभी पैसा धेला भर तिलों का खालेना वैसा उपकारी न होगा जिस को सफल हुआ कहा जाय । तिलों में चिकनाई स्नेह गुण प्रधान है । और स्निग्ध प्रिय लावण्यादि गुण युक्त ललित दर्शनीय सन्तान सब को इष्ट होता है । चिकनाई स्निग्धता ही दर्शनीय होने का कारण है । कारण गुण कार्य में आता और कारण के ठीक होने पर ही कार्य होता है और अन्य कारणों की अपेक्षा सन्तानोत्पत्ति के प्रधान कारण तिल हैं । इस प्रकार तिलदाता में तिलों का प्रधान गुण धीरे २ बढ़ता वा अन्यों के द्वारा आता है जिस का परिणाम अभीष्ट सन्तति होती है । घटपटादि दृश्य को देखने में प्रदीप अङ्ग वा रूप बोध के साधन का एक भाग है । इसी कारण केवल चक्षु वा केवल दीपक से रूप का बोध नहीं होता । सूर्यादि भी यौगिक अर्थ से प्रदीप शब्दवाच्य माने ही जायंगे इस कारण जो देखने के अङ्ग प्रकाश को देता है उस को प्रकाशरूप उत्तम चक्षु ही मिलते हैं । जिस से देखें वह चक्षु इस अर्थ से दीपक को भी चक्षु और जो दिखावे जतावे प्रदीप्त प्रसिद्ध करे वह दीपक इस अर्थ से चक्षु को भी दीपक मान सकते हैं क्योंकि दोनों तैजस हैं । जैसे गाली देने वाले लोग अन्य से गाली ही पाते हैं और प्रिय कोमल सत्य हित बोलने वाले भी अन्यों से वैसा ही वचन सुनते वा अन्य भी उन से वैसा ही बोलते हैं । सुवर्ण आयु को बढ़ाने वाला आयुर्वेद में प्रसिद्ध है कि " वचासाधितघी, सुवर्ण और विल्वचूर्ण ये तीनों बुद्धि, आयु, आरोग्य पुष्टि और सौभाग्य को बढ़ाने वाले हैं " सुवर्ण सार होने से स्वयं भी चिरस्थायी वा दीर्घायु है इसी कारण खाने वा पास रखने से आयु को बढ़ाता है । जिस में जो गुण होता उस के सङ्ग से वही गुण सङ्गी में आया करता है । जैसे कुआ जल को देता तो उस में इधर उधर से आकर अन्य जल संचित होजाता वैसे ही जो जिस वस्तु का दान लोभादि त्याग के धर्म बुद्धि से करता है उस के समीप अधिकता से वही वस्तु आता अथवा वह उसी को खेंचता है इस कारण उस के अधिक उस का मेल भी अधिक ही होता है और मेल से उस २ के गुण सङ्ग करने वाले में प्रविष्ट होते ही हैं । जो जिस को जिस वस्तु का दान करता वह स्वभाव से ही उस दाता को वही वस्तु देने का उत्साह करता है । जैसे किसान

लोग बोने के समय पृथिवी को अन्न देते और वह पृथिवी उसी अन्न को कि भी बहुत अधिक उत्पन्न करके किसान को देती है। इसी प्रकार जो मनुष्य को जैसा अन्न भोजन कराता है वह वैसे ही अन्न से अपने भोजन कराने को भोजन कराने के लिये चेष्टा करले इस प्रकार चराचर संसार में यह नि ही दीखता है। उसी के अनुसार यहां भी सुवर्ण दाता के लिये इस जन्म जन्मान्तर में सूक्ष्म संस्कारों से संस्कृत प्रतिग्रहीता लोग सुवर्ण ही देते हैं। की प्रधानता से ही रूप्य-रुपया कहाता, चन्द्रमा में जो रूप है वही मुख्य शब्द का वाच्यार्थ है। इसी कारण चन्द्रमुखी सुन्दरी स्त्रियों को ही मुख्य कवि लोग रूपवती कहते मानते हैं क्योंकि वेद में लिखा है कि "सोमो अधिश्रितः" सोमतत्त्व रूप चन्द्रमा गौरी स्त्रियों में अधिक ठहरा है। रूप सोमतत्त्व ही रुपया में प्रधान है इस से सामान्य कर रूपप्रधान रु दि वस्तुओं का दान शील दाता पुरुष उत्तम रूप को प्राप्त होता है। और रुई से उत्पन्न होने के कारण वस्त्रों में शुक्लता रूप प्रधान वा स्वाभा है। अन्य कृत्रिम रंग छूटने पर पुनरपि वस्त्र श्वेत ही निकल आते। और ता सोम का ऐकान्तिक गुण है इस से रूप प्रधान वस्तुओं का दान शील पु चन्द्र लोक सम्बन्धी सुख का भागी होता। अश्वनाम घोड़े में देवताद्वन्द्व धान है इस से अश्व को देने वाला देवताद्वन्द्व लोक सम्बन्धी सुख को पात कामासक्ति की अधिक प्रबलता घोड़े में चन्द्रमा का और शीघ्रगामी हो तथा रक्त—लाल वर्ण सूर्य का प्रधान गुण है इस प्रकार अश्व में देवताद्वन्द्व और अश्वि भी देवताद्वन्द्व हैं। बैल में पुष्टि प्रधान है। और अन्नादि को त्पन्न करने द्वारा श्री—लक्ष्मी भी है। गौ में सूर्य तत्त्व प्रधान है इस से गोदा शील वैसे सूर्यलोक के सुख को प्राप्त होता है। स्वयं वा अन्य के द्वारा वेद पढ़ाने वा पढ़वाने वाला ब्राह्मण नित्य शुद्ध बुद्ध मुक्तस्वरूपतादि रूप ब्रह्म ईश्वर की तुल्यता को प्राप्त होता। विद्यारूप वेद के दान काही सब दुःख से छूटना सब से उत्तम फल है। इस कारण अन्य दानों की अपेक्षा ब्रह्म का विशेष उत्तम फल जानो। जिस २ प्रकार के दृढ़ शुद्ध उत्तम मध्यम नि भाव से दाता जिस २ वस्तु को देता है उस का वैसा ही उत्तम मध्यम नि फल भी होता जानो। मात्रा का बोध और तदनुसार सङ्ग से होने वाले की प्राप्ति पूर्व के तुल्य यहां भी सर्वत्र धर्मशास्त्र के तत्त्व जिज्ञासुओं को लग लेनी चाहिये ॥ २३४ ॥

योऽर्चितंप्रतिगृह्णाति ददात्यर्चितमेवच ।
तावुभौगच्छतःस्वर्गं नरकन्तुविपर्यये ॥
नविस्मयेततपसा वदेदिष्ट्वाचनानृतम् ।
नार्त्तोऽप्यपवदेद्विप्रान् नदत्त्वापरिकीर्त्तयेत् ॥
यज्ञोऽनृतेनक्षरति तपःक्षरतिविस्मयात् ।
आयुर्विप्रापवादेन-दानंचपरिकीर्त्तनात् ॥२३७॥

अ०-यः सत्कारपुरस्सरं ददाति यस्तथा प्रतिगृह्णाति च तावुभौ शुभवासनासंचयाद्यथोचितं सुखविशेषमाप्नुतो विपर्यये तु दुःखविशेषम् । तपसा सह वर्त्तमानो न विस्मयेत सन्देहं भयं च न कुर्यात् किं भविष्यतीति । यज्ञं कुर्वाण आदौ मध्येऽन्त्ये चानृतं न वदेत् । आर्त्तो दुःखितोऽपि विप्रान्मेधाविनो ब्राह्मणान्नापवदेत् । दानं दत्वा च न परिकीर्त्तयेत् । यज्ञस्य मनसा प्रधानः सम्बन्धो मनश्चानृतभाषणेन दुष्यति तेनैव यज्ञः क्षरति । तपसः परिणामः शुद्धिः, सन्देहेन भयेन चाभ्यन्तरा शुद्धिर्नश्यति । शुद्धविप्राणां सङ्गेनायुर्वर्धते विप्रापवादी दुःसङ्गदोषात्क्षीणायुः सम्पद्यते । दानस्य फलं कालान्तरे स्वोपकारस्तच्च परिकीर्त्तनेन कीर्त्तिरेव सद्यः फलमापद्यते ॥

भा०-अत्र पूर्वं पद्यमुक्तदानविधौ दानग्रहणयोः सत्कारप्रकारबोधनार्थम् । द्वितीये विधिचतुष्टयमन्त्ये च निन्दार्थवादः । व्रतोपायनमेव यज्ञे प्रधानमिति कृत्वा शतप-

धब्राह्मणारम्भएव व्रतोपायनमुक्तम् । तच्च-अग्ने व्रत व्रतं चरिष्यामि तच्छकेयमित्यादिरूपं सत्याचरणप्रतिज्ञान म्। सर्वेष्वेव साध्यकार्येषु प्रधानाङ्गापाये तस्य कार्यस्यासि द्धिरेव जायते । यज्ञे च बाह्याभ्यन्तरशुद्धिरूपं सत्यमेव प्र धानमङ्गं तदभावे स नष्टकल्पएव बोध्यः । तपसि सह शीलत्वं प्रधानं तस्मिन्सति निर्विकल्पं चेतः समाधीयते विस्मयेन च समाधानं व्याहन्यते तेन तपोवैयर्थ्यं स्फु मेव । सत्सङ्गेन सत्कर्मसु प्रवृत्तिर्वर्धते विप्रापवादी च प्रकर्माण्यप्यपवदत्येव न च तदा स शुभकर्मानुष्ठातुं शक्नो ति प्रत्युत दुःसङ्गेनाशुभं कर्मानुष्ठातुं प्रवर्त्तते तेनायुर्नश्य ति। दानस्य च हृदि सन्तोषादिरूपेण संचिताः शुभसंस्का रा बद्धमूलाः कालेन महान्ति फलान्युत्पादयन्ति । कीर्ति रूपफलस्य च सद्योभोगागतत्वाद् दानपरिणामस्तदैव न श्यति । तस्माद्यथोद्दिष्टफलावाप्तये यज्ञादय उक्तप्रकारेणै व साध्याः ॥ २३७ ॥

भाषार्थः-(योऽर्चितं प्रतिगृह्णाति) जो आदर सत्कार प्रसन्नता वा श्रद्धा पू दिये पदार्थ का ही दान लेता किन्तु अश्रद्धा वा अनादर से दिये को नहीं ले (ददात्यर्चितमेव च) और जो श्रद्धा वा आदर प्रसन्नता से ही दान देता है श्रद्धा से नहीं (तावुभौ स्वर्गं गच्छतः) वे दोनों शुद्ध वासनाओं के संचयरूप से यथोचित सुख विशेष स्वर्ग को ही प्राप्त होते हैं ( विपर्यये तु नरकम् ) इस से उलटा अश्रद्धा अनादर के साथ दान लेने देने से नरक को प्राप्त होते ( तपसा न विस्मयेत ) तप करता हुआ पुरुष सन्देह वा भय न करे किन्तु तथा साहस और विश्वास के साथ दृढ रहे । ऐसा होजाय तो क्या होगा इत्यादि प्रकार सन्देह न किया करे ( इष्ट्वा चानृतं न वदेत्) यज्ञ करता हु मिथ्या वा असंबद्ध अशुद्ध अनुचितादि वचन कदापि न बोले ( आर्त्तोऽपि

प्राज्ञापवदेत्) अच्छे श्रेष्ठ धर्मात्मा विद्वान् प्राज्ञ ब्राह्मणों से अपने को कुछ दुःख पहुंचने पर भी उन की निन्दा न करे (दत्त्वा न परिकीर्त्तयेत्) दान देकर अपनी ओर से स्वयं प्रसिद्धि करने कराने का उद्योग न करे (अनृतेन यज्ञः क्षरति) मिथ्या भाषण से यज्ञ नष्ट होजाता है क्योंकि मन के साथ यज्ञ का मुख्य सम्बन्ध है "मनो यजुर्वेदः" यह शतपथ ब्राह्मण में लिखा है यजु, यज्ञ, मन, उपासना, संस्कृति, ये सब एकही के नाम हैं और मिथ्याभाषणादि से मन दूषित होता इसी कारण यज्ञ क्षीण होता है ( विस्मयात्तपः क्षरति ) विस्मय करने से तप क्षीण होजाता है क्योंकि तप का परिणाम वा उद्देश शुद्धि है सो सन्देह वा भय से भीतरी शुद्धि वा प्रसन्नता नष्ट होजाती (विप्रापवादेनायुः) ब्राह्मणों की निन्दा से आयु घटता क्योंकि शुद्ध विद्वान् बुद्धिमान् धर्मनिष्ठों के सङ्ग से शुभ गुण आने द्वारा आयु बढ़ता है इसी कारण विपरीताचरण से आयु का नाश होता है (दानं च परिकीर्त्तनात् ) कीर्त्ति की चाहना से किया दान भी नष्ट हो जाता क्योंकि कालान्तर में अपना यथोचित उपकारक होना ही दान का मुख्य फल है। सो वह कीर्त्तन से वहीं समाप्त हो जाता है ॥

भा०-इन में पहिला श्लोक पूर्वोक्त दानविधि विषयक देने लेने के सम्यक् प्रकार को जताने के लिये है। द्वितीय श्लोक में चार विधिवाक्य हैं और अन्त्य में अर्थवाद है। यज्ञरूप कर्म में व्रतोपायनप्रधानाङ्ग मानकर शतपथ ब्राह्मण के आरम्भ में ही व्रतोपायन कहा है सो (अग्ने व्रतपते०) हे व्रतपति अग्नि मैं सत्याचरण रूप व्रत करूंगा उस को ठीक कर सकूं इत्यादि प्रकार सत्याचरण की प्रतिज्ञा करना ही व्रतोपायन कहाता है। सभी साध्य कार्यों में प्रधान अङ्ग के न होने पर उस कार्य का न होना ही माना जाता है। जैसे इंधन, चौका चूल्हा बर्त्तन पानी, पाचकादि सभी के होने पर भी केवल एक प्रधानाङ्ग आटा, चावल दाल के न होने पर भोजन नहीं बन सकता। और यज्ञ में बाह्याभ्यन्तर शुद्धिरूप सत्य ही प्रधान अङ्ग है उस के न होने पर यज्ञ को नष्टप्राय ही जानो। तप में सहन शीलता होना प्रधान इस कारण है कि शीतोष्णादि द्वन्द्वसहन का ही नाम तप है। शीतोष्णादि को सहलेने पर निस्सन्देह चित्त समाधिस्थ हो जाता है। और सन्देह होने से चित्त की एकाग्रता बिगड़ जाती है तिससे स्पष्ट ही तप व्यर्थ वा नष्ट हो जाता है। सत्सङ्ग से सत्कर्मों में प्रवृत्ति बढ़ती है। और ब्राह्मणों का निन्दक उन के सन्ध्यादि कर्मों की भी निन्दा क-

रता ही है तब वह शुभ कर्मों का सेवन भी नहीं करसकता प्रत्युत दुष्ट सङ्कल्प अशुभ कर्म के अनुष्ठान में प्रवृत्त होता उस से आयुक्षीणहोता जाता है। और संतोषादिरूप से हृदय में संचित हुए दान धर्म के शुभ संस्कार काल पाकर दृढ़ बद्धमूल हो के बड़े २ शुभ फलों को उत्पन्न करते हैं। और दान का कीर्ति फल शीघ्र भोग में आजाने से दान का परिणाम वहीं नष्ट हो जाता है। इस कारण पूर्वोक्त उत्तम फल प्राप्ति के लिये यज्ञादि उक्त प्रकार से ही करने चाहिये। ॥ २३७ ॥

धर्मंशनैःसंचिनुयाद्-वल्मीकमिवपुत्तिकाः।
परलोकसहायार्थं-सर्वभूतान्यपीडयन् ॥
नामुत्रहिसहायार्थं-पितामाताचतिष्ठतः।
नपुत्रदारानज्ञाति-र्धर्मस्तिष्ठतिकेवलः ॥
एकःप्रजायतेजन्तु-रेकएवप्रलीयते।
एकोऽनुभुङ्क्तेसुकृत-मेकएवचदुष्कृतम् ॥
मृतंशरीरमुत्सृज्य-काष्ठलोष्टसमंक्षितौ।
विमुखाबान्धवायान्ति-धर्मस्तमनुगच्छति ॥
तस्माद्धर्मंसहायार्थं-नित्यंसंचिनुयाच्छनैः।
धर्मेणहिसहायेन तमस्तरतिदुस्तरम् ॥
धर्मप्रधानंपुरुषं तपसाहतकिल्बिषम्।
परलोकंनयत्याशु भास्वन्तंखशरीरिणम्॥२४३॥

अ०—नित्यंनित्यं यज्ञाध्ययनदानान्यल्पाल्पान्यपि सेवमानो महान्तं धर्मसंचयं करोति। यश्च भूतानि मनो-

वाक्कायैः पीडयति स यज्ञादिकं प्रत्यहं सेवमानोऽपि धर्म-संचयं नाप्नोत्येव । जन्मान्तरे सहायार्थं पिता माता पुत्रो दारा ज्ञातयश्च नहि तिष्ठन्ति किन्त्वेको धर्मएव तिष्ठति । तस्मात्पित्रादिपालनपोषणप्रसादाद्यर्थमप्यधर्ममकुर्वन् धर्म-मेवाचरेत् । सर्वो जन्तुर्जीवः प्रसवकाले एकएवोत्पद्यते एकएव च म्रियते न कोऽपि तेन सह जायते म्रियते वा त-थाचैकएव स्वनिष्पादितसुकृतदुष्कृतयोः शुभमशुभं च फलं भुङ्क्ते यः कुपथ्यमन्नं भुङ्क्ते तस्यैवोदरं पीड्यते नान्यस्य तस्माद्दुःखफलभोगभयेनाधर्मं हित्वा धर्मः सेव्यः । मृतं श-रीरं श्मशानादिषूत्सृज्य बान्धवाः प्रत्यावर्त्तन्ते नतु देहा-न्निस्सृतजीवेन सह बान्धवा गन्तुं शक्ताः, धर्मश्च सूक्ष्मत्वा-ज्जीवेन सह गच्छत्येव । तस्मात्पूर्वतः शनैः संचितं सहा-यार्थं प्रदीपमिव धर्ममुपादाय गच्छन्देहान्निःसरन् दुस्तर-मन्यप्रकारेण तर्त्तुमशक्यं तमस्तरति । धर्मपरायणं तपसा शोधनप्रकारेण हतकल्मषमलं भास्वन्तं शुद्धं खशरीरिण-माकाशवन्निर्लिप्तं पुरुषं पुंस्त्वविशिष्टं जीवात्मानं शनैः संचितो धर्म आश्वेव परलोकं नयति ॥

भा०—सर्वाण्येव कार्याणि शनैः संचितानि बद्धमूला-नि बृहदुत्तमफलानि च भवन्त्येव । यथामहानपि वृक्षः कुतश्चिदुत्थापितोन्यत्र धृतोऽप्यबद्धमूलत्वाच्छुष्यति । तत्रै-व शनैः संचितो बद्धमूलश्चैकदा जलादिसाधनाभावेऽपि ति-ष्ठत्येव । शनैः क्रियमाणं कालेन प्रत्यङ्गं व्याप्नोति । प्रत्य-

ङ्क्व्याप्तिरेव विशिष्टदार्ढ्यस्य कारणम् । यः कोऽपि यज्ञा-ध्ययनदानादिरूपं धर्ममारचन्नपि हिंसाद्यधर्मं न जहाति नासौ सम्यगुचितं धर्मफलं लभते । अत्र प्रथमपद्ये वि-धिरन्येषु च प्रशंसार्थवादाएव सन्ति । ते च सम्यगालोच-नेन सत्याएव प्रतीयन्ते ॥२४३॥

भाषार्थः-( परलोकसहायार्थम् ) जन्मान्तर, देशान्तर लोकान्तर में सहायता मिलने दुःख से बचने के लिये ( सर्वभूतान्यपीडयन् ) सब प्राणियों को पीड़ा वा दुःख न देता हिंसारूप अधर्म को बचाता हुआ ब्राह्मणादि पुरुष ( पुत्तिका वल्मीकमिव ) चीटी आदि जन्तु जैसे एक २ छोटा २ दाना जोड़ २ अपने बि-ल [ भिले ] रूप घर को भर लेती वैसे ( शनैर्धर्मं संचिनुयात् ) धीरे २ धर्म का संचय करे अर्थात् वेदाध्ययन, यज्ञ और दानरूप तीनों प्रकार के धर्म को थो-ड़ा २ यथाशक्ति नित्य करता हुआ जन्म भर में वहुतसा धर्म संचित कर लेता है और अन्य प्राणियों को दुःख पहुंचाने वाला ब्रह्मयज्ञादि करता हुआ भी धर्म में संचय नहीं करपाता (अमुत्र सहायार्थं पिता माता च न तिष्ठतः) जन्मान्तर वा लोकान्तर में सहायता देने के लिये पिता माता नहीं पहुंचते ( न पुत्र दारा न ज्ञातिः) न स्त्री न पुत्र न कुटुम्बी पहुंचते हैं किन्तु (केवलो धर्मस्तिष्ठति) एक धर्म ही वहां सहायता कर सकता है (जन्तुरेकः प्रजायतएकएव प्रलीयते) प्रत्येक जीव प्रसव के समय अकेला उत्पन्न होता और मृत्युकाल में अकेला ही मरता है उस के साथ कोई भी स्त्री पुत्रादि जन्मता मरता नहीं तथा (एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ) अकेला ही अपने किये शुभ कर्म का अच्छा फल भोगता और अकेला ही दुष्कर्म का बुरा फल भोगता है । जो कुपथ्य अन्न को खाता उसी का पेट पिड़ाता स्त्री पुत्रादि पीड़ा को नहीं ले सकते । तिस से पितादि के पालन पोषण और प्रसन्नतादि के लिये भी अधर्म को न करता हुआ धर्म करे और दुःख फल भोग के भय से भी अधर्म को छोड़ के धर्म का सेवन करे (काष्ठलोष्ठ-समं मृतं शरीरं क्षितावुत्सृज्य) लकड़ी ढेलादि के समान मरे हुए मुर्दा शरीर को श्मशानादि भूमि में छोड़ वा जलाके (बान्धवा विमुखा यान्ति) कुटुम्बी लोग मुख फेर के लौट आते हैं (धर्मस्तमनुगच्छति) परन्तु धर्म उस मृतक जीव के पीछे

साथ जाता ही है (तस्मात्सहायार्थं धर्मं शनैर्नित्यं संचिनुयात्) तिस से बहुत काल तक धीरे २ संचित किये दीपक के तुल्य प्रकाश स्वरूप शुद्ध धर्म का सहायता के लिये नित्य संचय करता रहे क्योंकि ( धर्मेण हि सहायेन दुस्तरं तमस्तरति ) धर्म की सहायता से ही अज्ञानान्धकाररूप अगाध पाप समुद्र के पार हो सकता है (धर्मप्रधानं पुरुषम्) धर्मपरायण धर्मनिष्ठ ( तपसा हतकिल्बिषम् ) शोधनार्थ किये तपाने रूप तप से नष्ट हुआ है पाप रूप मल जिस का ऐसे ( भास्वन्तं खशरीरिणम् ) आकाश के तुल्य निर्लिप्त प्रकाशमय शुद्ध सूक्ष्म शरीर वाले पुरुष नाम पुंस्त्व शक्ति प्रधान जीवात्मा को धीरे २ संचित किया धर्म ( परलोकमाशु नयति) शीघ्र ही उत्तम लोक वा उत्तम दशा में पहुंचाता है ॥

भा०—सभी संसार के कार्य धीरे २ किये जिन की मूल वा जड़ ठीकदृढ बंध गयी ऐसे हुए बड़े उत्तम फल वाले होते हैं। जैसे बड़ा और अच्छा भी वृक्ष कहीं से खोदकर कहीं अन्यत्र लगाया जाय तो जड़ न बंधने से जलादि सामान मिलने पर भी सूख जाता और वहां धीरे २ बढ़ा जड़ पकड़ा एकसमय नैमित्तिक जलादि साधन के न मिलने पर भी हरियाता रहता है। जो काम धीरे २ किया जाता है वह अधिक काल में सर्वांश में व्याप्त हो जाता और प्रत्यङ्ग व्याप्ति ही सर्वत्र अधिक दृढ़ता का कारण है। जो कोई वेदाध्ययन, यज्ञ और दानादिरूप धर्म का आचरण करता हुआ भी हिंसादि अधर्म को नहीं त्यागता उसको धर्म का उचित सम्यक् फल नहीं मिलता यदि कुछ मिलता है तो वह इतना कम जो न मिलने में गिनाजाय। यहां पहिले एक श्लोक में विधिवाक्य है तथा अगले सब श्लोकों में धर्म संचय के प्रशंसार्थवाद हैं। वे सब प्रशंसा विचार पूर्वक सोचने से सत्य ही हैं ॥ २४३ ॥

**उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत्सह ।**
**निनीषुःकुलमुत्कर्ष मधमानधमांस्त्यजेत् ॥**
**उत्तमानुत्तमान्गच्छन् हीनान्हीनांश्चवर्जयन् ।**
**ब्राह्मणःश्रेष्ठतामेति प्रत्यवायेनशूद्रताम् ॥**

दृढकारीमृदुर्दान्तः क्रूराचारैरसंवसन् ।
अहिंस्रोदमदानाभ्यां जयेत्स्वर्गंतथाव्रतः॥२४

अ०—कुलमुत्कर्षं निनीषुर्ब्राह्मणादिर्द्विजः स्नातक उ
त्तमैरुत्तमैः सहैव नित्यं ब्राह्मान्यौनांश्च सम्बन्धानाचरेदध
मानधमांश्च त्यजेत्तद्द्वयं कुर्वन् सत्सङ्गेन श्रेष्ठतां दुःसङ्गेन
शूद्रतामेति । यथा शुद्धं भोज्यमप्यन्नं मलसङ्गेन दूषि
त्याज्यं सम्पद्यते। यथा वा कीटोऽपि सुमनःसङ्गादारोहति
सतां शिरः । दृढकारी दृढमेव कर्म कर्त्तुं तच्छीलो मृदुः
निष्ठुरो दान्तो जितेन्द्रियः क्रूराचारैस्त्यक्तसङ्गोऽहिंस्रो हिं
सातो निवृत्तो दमेन मनोनिग्रहेण दानेन च युक्तस्तथाव्रत
सर्वेष्वेव तत्परस्तच्छीलस्तन्निष्ठः स्वर्गं जयेद्विशिष्टं सुखमा
प्तुं शक्तः स्यात् ॥

भा०—सर्वधर्माङ्गेषु द्वयमेव प्रधानं निकृष्टचराचरतो
निवृत्तिरुत्कृष्टसङ्गश्च तेन सहैव दृढकारित्वादिकं च॥२४६

भावार्थः—( कुलमुत्कर्षं निनीषुः ) कुल की उत्तमता वा प्रशंसा चाहता
हुआ ब्राह्मणादि स्नातक द्विज ( उत्तमैरुत्तमैः सह नित्यं सम्बन्धानाचरेत् ) उ
त्तमों उत्तमों के साथ नित्य ही विद्या, धर्म विषयक वा विवाहादि नामक स
म्बन्धों का आचरण करे अर्थात् अपने से उत्तमों के साथ सदा मेल करता रहे
और ( अधमानधमांस्त्यजेत् ) अपने से विद्या कुल, वा प्रतिष्ठा में छोटों २ के
साथ सम्बन्ध त्यागता रहे ( उत्तमानुत्तमानूगच्छन् हीनान्हीनांश्च वर्जयन् ) उत्त
उत्तमों से मेल करता हुआ और छोटों २ को छोड़ता हुआ ( ब्राह्मणः श्रेष्ठता
मेति) ब्राह्मण श्रेष्ठता को प्राप्त होता और (प्रत्यवायेन शूद्रताम् ) इस से उलटा
करता अर्थात् उत्तमों से मेल न करके नीचों २ का संग करता हुआ नीचता
शूद्रभाव को प्राप्त होता है। जैसे भोजन करने योग्य शुद्ध भी अन्न मल के स
मीप धरने से दूषित हुआ त्याज्य हो जाता है अथवा जैसे अति नीच कीड़ा

फूलों के साथ मेल करके अच्छे श्रेष्ठ पुरुषों के शिर पर पहुंचता है वैसे प्रत्येक मनुष्य सङ्ग के गुण दोषों से बढ़ता घटता है (दृढकारी मृदुर्दान्तः) दृढ़ता के साथ कर्म करने, कठोरता निठुरता से रहित जितेन्द्रिय (क्रूराचारैरसंवसन्) दुष्ट दुराचारी लोगों का सङ्ग न करता हुआ ( अहिंस्रो दमदानाभ्याम् ) हिंसादि पाप से पृथक् वर्त्तमान तथा मन के वशीकरण और दानधर्म से युक्त ( तथाव्रतः स्वर्गं जयेत्) सब दृढ़कारित्वादि गुणों में तत्पर तत्स्वभाव और तन्निष्ठ हुआ स्वर्ग नाम विशेष सुख को प्राप्त कर सकता है ॥

भा०–धर्म के सब अङ्गों वा अंशों में दो बातें प्रधान हैं–जड़, चेतन–सब नीचों का सङ्ग छोड़ना और अच्छे शुद्धों का सङ्ग करना अर्थात् कुसङ्ग से बचना और सत्सङ्ग करना इस के साथ ही दृढ़कारी, कोमल, क्षमाशील, जितेन्द्रिय होना, मन को वश में करना हिंसा का त्याग और दानशील परोपकारी होना वर्तने में अधिकांश धर्म का सेवन आ जाता है ॥ २४३ ॥

एधोदकंमूलफल–मन्नमभ्युद्यतंचयत् ।
सर्वतःप्रतिगृह्णीयान्–मध्वथाभयदक्षिणाम् ॥
आहृताभ्युद्यतांभिक्षां–पुरस्तादप्रचोदिताम्
मेनेप्रजापतिर्ग्राह्या–मपिदुष्कृतकर्मणः ॥
नाश्नन्तिपितरस्तस्य–दशवर्षाणिपञ्चच ।
नचहव्यंवहत्यग्नि–र्यस्तामभ्यवमन्यते ॥

[चिकित्सककृतघ्नानां शिल्पकर्त्तुश्चवार्द्धुषेः ।
षण्ढस्यकुलटायाश्च उद्यतामपिवर्जयेत् ॥
नविद्यमानमेवंवै प्रतिग्राह्यंविजानता ।
विकल्प्याविद्यमानेतु धर्महीनःप्रकीर्तितः ॥ २ ॥]

शय्यांगृहान्कुशान्गन्धा–नपःपुष्पंमणीन्दधि ।
धानामत्स्यान्पयोमांसं शाकंचैवननिर्णुदेत् ॥

२८

गुरून्भृत्यांश्चोज्जिहीर्षन्-नर्चिष्यन्देवताति
थीन्। सर्वतःप्रतिगृह्णीयान्नतुतृप्येत्स्वयंततः
गुरुषुत्वभ्यतीतेषु-विनावातैर्गृहेवसन्।
आत्मनोवृत्तिमन्विच्छन्-गृह्णीयात्साधुतःस
॥ २५२ ॥

भा०—इन्धनमुदकं मूलं फलमन्नं मधु च यदभ्युद
मयाचितेन स्वयमेव श्रद्धया दीयमानमथाभयदक्षिणां
सर्वतो निकृष्टान्निषिद्धादपि प्रतिगृह्णीयात्। आहृता चास
वभ्युद्यता तां दात्रा दूरतो दातुमानीतां सम्मुखे कृत्वा गृह्ण
त्विति प्रार्थनया दीयमानां पूर्वं प्रतिग्रहीत्रा स्वयमन्यद्वार
वाऽयाचितामेवं भूतां दुष्कृतकर्मणोऽपि जनस्य भिक्षामन्न
वस्त्रधनादिरूपां प्रजापतिः प्रजापालकः प्रामाणिकानामु
त्तमकोटिमाप्तो मनुर्ग्राह्यां मेने स्वीकृतवानिति भृगुराह
पूर्वपद्यस्यैव स्पष्टार्थोऽयमनुवादः। यईदृशां तां भिक्षामभ्य
वमन्यते तिरस्करोति नादत्ते तस्य पञ्चदशवर्षाणि पित
कव्यं नाश्नन्ति देवेषु प्रधानोऽग्निर्हव्यं च न वहति। पूर्व
पद्यस्यायं निन्दार्थवादः। अस्यैवाग्रे चिकित्सकस्येत्यादि
पद्यद्वयं केषुचिदेव पुस्तकेषूपलभ्यते तस्यार्थविशेषः प्राक्
द्रष्टव्यः। शय्यां गृहान् कुशान्कर्पूरादिगन्धप्रधानद्रव्याणि
जलं पुष्पं मणीन्दधि धाना भृष्टमन्नं मत्स्यान् पयः क्षी
मांसं शाकं चैव न निर्णुदेत्प्राप्तमयाचितमागतं नैव निरा
कुर्यादपितु गृह्णीयादेव। गुरून् पित्राचार्यादीन्भृत्यान्पुत्र
कलत्रादींश्चोज्जिहीर्षन् क्षुत्पीडातउद्धर्तुमिच्छन् देवताति

र्थीश्चार्चिष्यन्सर्वतः शूद्रातिशूद्रेभ्योऽपि धनान्नादिकं प्रतिगृह्णीयात्तेनान्नधनादिना स्वयं न तृप्येत्तेषामेवार्चनं पालनं च कुर्यात्। गुरुषु पित्रादिष्वभ्यतीतेषु मृतेषु तेषां जीवत्कालेऽपि तैर्विना गृहे वसन् स्नातकः स्वस्यैवोपजीवनमन्विच्छन्सदा साधुत एव गृह्णीयान्नतु सर्वतइति ॥

भा०—प्रथमपद्येऽभ्युद्यतमिति पदं प्रत्येकैधादिना संबद्धं बोध्यम्। अन्नं चात्रानापद्याममेव विज्ञेयमापदि तु पक्वस्यापि सर्वतो ग्रहणं नानुचितम्। अमृतं स्यादयाचितमिति पूर्वमुक्तं याचितापेक्षया तस्योत्तमत्वं नतु शिलोञ्छापेक्षयाऽतोऽयाचितवृत्तेरेवायं सर्वः प्रपञ्चो बोध्यः। अत्र २४९। २५० पद्ये चिन्त्ये,तत्र पूर्वपद्ययोर्या विधिस्तेनादानविधानादेवानादाननिषेधोऽर्थापत्तितएव सिद्धः। तथापि कश्चिन्नाददीत चेन्नासौ पापभाग् भवति। प्रापणात्सर्वकामानां परित्यागो विशिष्यतइति मनुनैवोक्तत्वादादानापेक्षयाऽनादानं श्रेष्ठमेव। याचनापुरस्सरनीचादितश्चादानापेक्षया चायाचितादानमाधिक्येन धर्मसम्बद्धं सन्तोषरक्षणादिति ग्रन्थकाराशयः। द्वितीयं च शय्यामिति पद्यं निरर्थकमिव भाति। एधोदकमित्यादौ श्लोकएधादीनामुपलक्षणार्थत्वाच्छय्यादीनामप्ययाचितानामादानमागतमेवेति पुनरुक्तम्। मत्स्यमांसयोरभक्ष्यत्वं च यक्षरक्षःपिशाचान्नमित्यादिनैकादशे वक्ष्यति। तयोरादानं भक्षणार्थं चेच्छास्त्राशयविरुद्धम्। कश्चिद्गृहीत्वा मांसभक्षिश्वादिजन्तुभ्यो दद्यात्तदा नायं दोषः। शिलोञ्छवृत्त्यपेक्षयाऽयाचितप्रतिग्रहो निकृ-

ष्टोऽपि गुर्वादिक्षुत्पीडनापेक्षया वरएवेति गुरूनित्यादिना प्रदर्शितम् । अयाचितादानेऽप्युत्कृष्टधर्म्यवृत्त्यपेक्षया यो दोषस्तस्य गुर्वाद्यर्थस्वीकारे दोषापेक्षया गुर्वादिसेवनपालनयोः पुण्याधिक्यमिति सूचितम् । कर्त्ता दोषेण लिप्यतइति कथनाद्गुर्वादीनां दोषाभावएव बोध्यः । शिलोञ्छवृत्त्या चाल्पएवान्नलाभस्तेन बहूनां पालनमसंभवम् । भिक्षादिवृत्त्यापि पूर्ववृत्त्यभावे गुर्वादयः सेव्याइति सर्वं शास्त्रे व्यवस्थितमेव बोध्यम् ॥ ५२ ॥

भाषार्थः-( एधोदकं मूलफलमन्नं मधु ) ईंधन समिधादि, जल, मूल, फल, अन्न और मधु-शहद इत्यादि पदार्थों को (अभ्युद्यतं च यत्) कोई श्रद्धालु दाता विना मांगे देने के लिये सामने उपस्थित करके कहे कि लीजिये (अथाभयदक्षिणाम्) और अभय-निर्भयतारूप दान को (सर्वतः प्रतिगृह्णीयात्) गृहस्थ ब्राह्मण सब किसी नीच वा निषिद्ध शूद्र वा अन्त्यज से भी लेलेवे (पुरस्तादप्रचोदिताम् आहृताभ्युताम्) पहिले से लेने वाले ने स्वयं वा अन्य द्वारा प्रसिद्ध वा संकेतमात्र भी जिस की चाहना प्रकट नहीं की हो ऐसी दूरसे दाता ने लाई सामने करके लीजिये इस प्रकार प्रार्थना पूर्वक दी हुई ( दुष्कृतकर्मणोपि भिक्षाम् ) दुष्ट कर्म वाले की भी अन्न धन वस्त्रादिरूप भिक्षा को (प्रजापतिर्ग्राह्यां मेने) प्रामाणिक पुरुषों में उत्तम कोटि को प्राप्त प्रजारक्षक मनु नामक ब्रह्मा जी ने ग्रहण करने योग्यमानी स्वीकार की है यह भृगु जी श्रोता ऋषि लोगों से कहते हैं। पूर्व श्लोक का ही आशय स्पष्ट खोलने के लिये द्वितीय श्लोक में अनुवादमात्र कथन किया है ( यस्तामभ्यवमन्यते ) जो उस भिक्षा का अपमान तिरस्कार करता अर्थात् स्वीकार नहीं करता ( दश वर्षाणि पञ्च च ) पन्द्रह वर्ष तक (तस्य पितरो नाश्नन्ति न चाग्निर्हव्यं वहति ) उस के यहां पितर नहीं खाते और न अग्नि हविष्य को पहुंचाता है प्रयोजन यह कि विना मांगे श्रद्धा से दी हुई भिक्षा के अनादर में श्रद्धा का ही अनादर होता है और श्रद्धा का अनादर करने वाले के श्रद्धा के हट जाने से देवयज्ञ पितृयज्ञ भी फिर उस से नहीं हो सकते । इस दशा में पन्द्रह वर्ष कहना उपलक्षणार्थ माना जायगा कि पांच दश पन्द्रह वर्ष

आदि वर्णोंतक जैसा श्रद्धा का विघात करेगा वैसी ही पितृयज्ञादि धर्म की हानि होगी । पितर उस के यहां नहीं खाते इस का अभिप्राय यह हो सकता है कि श्रद्धा के न रहने से वह पितरों को खिलाता ही नहीं इसी से नहीं खाते इत्यादि । पूर्व श्लोकों में कहे विधिवाक्य का यह अर्थवाद है [ इसी के आगे किन्हीं २ लिखित पुस्तकों में दो श्लोक अधिक मिलते हैं उन का अर्थः–( चिकित्सककृतघ्नानाम् ) चिकित्सक वैद्य, कृतघ्न (शिल्पकर्त्तुश्च वार्द्धुषेः) कारीगर राज, मिस्त्री आदि (षण्ढस्य कुलटायाश्च) नपुंसक और व्यभिचारिणी स्त्री इन सब की (उद्यतामपि वर्जयेत् ) विना मांगे श्रद्धा पूर्वक लाई हुई भिक्षा को भी त्याग देवे स्वीकार न करे (विज्ञानतैवं विद्यमानं नवै प्रतिग्राह्यम्) समझदार मनुष्य को उचित है कि इस प्रकार चिकित्सकादि नीच के विद्यमान वस्तु का भी ग्रहण कदापि न करे (अविद्यमाने तु विकल्प्य) और वैसे नीच का पदार्थ न हो तो विकल्प वा अनादर करने से (धर्महीनः) धर्म से हीन (प्रकीर्त्तितः) कहा जाता है] (शय्यां गृहान् कुशान् गन्धान् ) शय्या स्त्री कन्या कुश और कपूरादि गन्धद्रव्यों (अपः पुष्पं मणीन् दधि) जल, फूल, मणि, दही, (धाना मत्स्यान् पयो मांसम्) चबेना, मछली, दूध, मांस (शाकं चैव न निर्णुदेत्) और शाक को भी अकस्मात् श्रद्धा से प्राप्त हुए का नकार वा अनादर न करे ( गुरून् भृत्यांश्चोज्जिहीर्षन् ) आचार्य पितादि गुरुलोगों की सेवा तथा स्त्री पुत्रादि भरणपोषण योग्यों का पालनादि द्वारा क्षुधादि की पीड़ा से उद्धार चाहता और ( देवतातिथीनर्चिष्यन्) अतिथि देवताओं का पूजनसत्कार आदर करना चाहता हुआ गृहस्थ पुरुष (सर्वतः प्रतिगृह्णीयात्) सब शूद्र वा अतिशूद्र से भी अन्न धनादि का दान ले लेवे (ततः स्वयं न तृप्येत् ) उस से स्वयं अपनी तृप्ति न करे किन्तु उस लिये दान से उन्ही गुरु आदि का पूजन और पोषण करे (गुरुषु त्वभ्यतीतेषु) गुरु पितादि वा स्त्री आदि न रहे हों अर्थात् मरगये हों ( विना वा तैर्गृहे वसन् ) अथवा वे भिन्न देश में हों तब घर में वसता हुआ पुरुष ( आत्मनो वृत्तिमन्विच्छन्सदा साधुतो गृह्णीयात् ) अपने ही लिये जीविका खोजता हुआ स्नातक सदा श्रेष्ठ पुरुषों से ही दान लेवे अर्थात् साधुनाम सच्चे परोपकारी श्रद्धालु सर्व वर्णस्थ धर्मात्माओं से ही ले कर निर्वाह करे असाधुओं से नहीं ॥

भा०–यहां प्रथम श्लोक में कहे अभ्युद्यत पद का एधादि प्रत्येक के साथ सम्बन्ध जानो । अन्न कहने से आपत्काल न होने पर कच्चे अन्न का ही ग्रहण

जानो पर आपत्काल में पके हुए रोटी पूरी आदि अन्न का भी सब से ग्रहण ना अनुचित नहीं। विन मांगे मिले को पूर्व अमृत कह चुके हैं। मांगे हुए भि क्षान्न की अपेक्षा उस की उत्तमता अपेक्षित है किन्तु शिलोञ्छवृत्ति की अपेक्षा से अयाचित उत्तम नहीं किन्तु उस से निकृष्ट है। इस से अयाचित वृत्ति की ही यह सब विशेष व्याख्यान है। यहां २४९। २५० ये दो श्लोक विचार साध्य हैं। इन से पूर्व के दो श्लोकों में जो विधिवाक्य है उसी से दान के स्वीकार का विधान आजाने से स्वीकार न करने का निषेध अर्थापत्ति से ही सिद्ध है। तो भी यदि कोई दान न ले या लेने की आवश्यता ही जिसने मेट दी हो वह न लेने से पापी नहीं होता "सब कामनाओं की प्राप्ति से उन का परित्याग करना विशेष है," इस प्रकार मनु जी के ही कहने से लेने की अपेक्षा न लेना अच्छा अवश्य है। और मांगने पूर्वक नीच शूद्रादि से दान लेने की अपेक्षा बिन मांगे मिलने पर लेना अधिक कर धर्म से सम्बन्ध रखने वाला है क्योंकि सन्तोष के साथ धैर्यरूप धर्म के विद्यमान रहने से, यह ग्रन्थकार का आशय है। और द्वितीय (शय्यां०) यह श्लोक निरर्थकसा इस कारण दीखता है कि (एधोदकं०) इत्या- दि श्लोक में इन्धनादि का ग्रहण उपलक्षणार्थ होने से विना मांगे शय्यादि का स्वीकार भी आ ही गया इस से पुनरुक्त दोष है। मछली और मांस का अभक्ष्य होना "मद्य मांस, यक्ष राक्षस पिशाचों का अन्न है ब्राह्मणादि आर्यों का नहीं," इत्यादि प्रकार अ० ११ में कहा है उन मछली मांसों का ग्रहण यदि भक्षण के लिये है तो शास्त्र के सिद्धान्त से विरुद्ध है। और यदि कोई मांसादि को लेकर मांसभक्षी कुत्ते आदि जन्तुओं को देदेवे तब यह दोष नहीं है। शिलोञ्छवृत्ति की अपेक्षा विन मांगे मिलने वाले वस्तु का लेना निकृष्ट भी है पर गुरु आदि भूखे रहने की अपेक्षा उत्तम ही है यह आशय--गुरून्० इत्यादि कथन द्वारा दिखाया है। विन मांगे लेने पर भी धर्मानुकूल उत्तम शिलोञ्छवृत्ति की अपेक्षा जो दोष है उस को गुरु आदि के लिये स्वीकार करने में दोष की अपेक्षा गुरु आदि के सेवन पालन में पुण्य का अधिक होना सूचित किया गया "कर्त्ता को दोष लगता" इस कथन से भोगने वाले गुरु आदि को दोष नहीं लगता जानो। शिलोञ्छवृत्ति से थोड़ा अन्न मिल सकता उस से बहुतों का पालन होना असम्भव है। पहि- ली २ अच्छी वृत्ति के अभाव में पर २ भिक्षादि वृत्ति से भी गुरु आदि की सेवा करनी चाहिये यह सब शास्त्र से व्यवस्थित ही जानो ॥ २५२ ॥

आर्द्धिकःकुलमित्रंच–गोपालोदासनापितौ ।
एतेशूद्रेषुभोज्यान्ना–यश्चात्मानंनिवेदयेत् ॥
यादृशोऽस्यभवेदात्मा--यादृशंचचिकीर्षितम् ।
यथाचोपचरेदेनं--तथात्मानंनिवेदयेत् ॥
योऽन्यथासन्तमात्मान--मन्यथासत्सुभाषते ।
सपापकृत्तमोलोके--स्तेनआत्मापहारकः ॥
वाच्यर्थानियताःसर्वे–वाङ्मूलावाग्विनिःसृताः।
तांस्तु यः स्तेनयेद्वाचं--ससर्वस्तेयकृन्नरः ॥

अ०–आर्द्धिकोऽर्द्धभागी कृषिगोरक्षवाणिज्यादि वृत्तिकर्मणि येन सहार्द्धभागो यस्य यश्च स्वस्य कुलस्य पारम्पर्येण मित्रं गोपालआभीरो दासः स्वसेवकउदकहारो नापितश्चैते शूद्रेषु भोज्यान्ना भोज्यं भोक्तुमुचितमन्नमेषामिति भोज्यान्नाः । यश्च शूद्र आत्मानं निवेदयेच्छूद्रभावेन स्वस्य शरणागतः स्यात्सोऽपि भोज्यान्नएव । अस्य शूद्रस्य यादृश आत्माऽन्तःकरणं यो यो भावो मनसि वर्त्तते यादृशं चास्य चिकीर्षितमिष्टं कर्त्तव्यं यथाचायमेनं द्विजं सेवयितुं प्रतिजानीत तथा तादृशरीत्यैव यश्चात्मानं निवेदयेत्स सम्यक्शरणागतो बोध्यः । योऽन्यथाऽऽत्मानं सन्तं सत्स्वन्यथा भाषते मनसि यद्वर्तते ततो विरुद्धं यो वाचा वदति स आत्मापहारक आत्मानं निकृष्टदशायां नेता स्तेनो लोके पापकृत्तमो गणयते । पापं करोतीति पापकृत् ततोऽधिकः पा-

पी पापकृत्तरस्ततोऽप्याधिक्येन पापिष्ठः पापकृत्तमः। य
र्वेऽर्था वाचि नियताः सर्वाण्यीष्टानि प्रयोजनानि वस्तूनि
च तत्तन्नामजन्यवाग्व्यापारसाध्यानि बुभुक्षितोऽहं पिपा
सितोऽहमिति सर्वं शब्देनैवावसीयते वागेव सर्वेषां मूलं स
र्वथा सत्या वेदवागेव सर्वस्य मूलमस्ति । वेदशब्देभ्यएवा
दौ दिवं भूमिं च निर्ममइत्युक्तपूर्वम् । अतएव मूलादङ्कु
रइव सर्वं वाचो निस्सरति । तामीदृशीं वाचं यो निवेदक
शूद्रादिः स्तेनयेत्स सर्वस्तेयकृन्नरो विज्ञेयो यथा मत्स्याद
सर्वमांसादो भवति ॥

भा०-नाद्याच्छूद्रस्य पक्वान्नमित्युक्तमामन्त्रवतिशूद्रा
देरपि ग्राह्यमुक्तमामेन सह शूद्रसहचरितदोषाणां न्यूनाग
गमनसम्भवात्। अत्र त्वार्द्धिकादिशूद्राणां पक्वमप्यन्नं भो
ज्यमिति विधिः। आर्द्धिकादिशूद्राणां ब्राह्मणादिसान्निध्येन
केचिद्दोषाः सङ्गादेवापयन्ति ब्राह्मणादीनां च केचिद्गुण
नश्यन्ति। एवं सङ्गजन्यगुणदोषैरुभयोर्बह्वंशे साम्यं जाय
तस्मात्तेषामन्नं भोज्यं तेन सङ्गिना नतु सर्वेणेति। गोपा
लश्च वैश्यकल्पः संकरोऽपि बीजोत्कर्षात्कथमपि द्विजत्
धारयत्येव तस्मात्स कुलमैत्र्यादिसङ्गाभावेऽपि भोज्यान्न
भवत्येव। अत्र भोज्यपदेन घृतपक्वं विशेषेण भोज्यमिति
गम्यते तदपेक्षया रोटिकादीनां च भक्ष्यत्वमवगन्तव्यम्
यश्चात्मानं यथार्थतया निवेदयति सत्यमेव सर्वं हार्दं भा
प्रकाशयति स सत्यभाषणपरीक्षायामुत्तीर्णः कर्मणा ब्राह्मण
त्वं प्राप्तउत्तमकोटिस्थो भोज्यान्नो जायते। आर्द्धिकगोपा

भा०—हविःशेषमल्पस्नेहयुक्तमपि पर्युषितं भक्ष्यं स्नेहसंयुक्तमन्यत्तु विशेषतः स्नेहेन व्याप्तमेवाद्यम् । अयं तु पर्युषिते प्रधानोऽपवादः । मध्यदशायां तु यवगोधूमजं स्नेहरहितमपि तादृशं तक्रादिकं च कदाचित्ततो निकृष्टाभक्ष्यापेक्षया मध्यस्थैर्भक्ष्यं यावता कालेनान्यान्नविकारो यादृशो विक्रियतेऽभक्ष्यो जायते न तावता तादृशं यवगोधूमजं विकृतं भवत्यतोऽन्यान्नापेक्षया तस्य कदाचित्कस्यचिद्भक्ष्यत्वमुक्तम् । न सद्यः पक्वापेक्षया तस्य प्राशस्त्यं साम्यं वात्र ग्रन्थकृता विवक्षितम् । अत्रावधि द्विजातीनां भक्ष्यमभक्ष्यं चोक्तमग्रे मांसभक्षणस्य वर्जने विधिं प्रवक्ष्यामीतिप्रतिज्ञा, द्वन्द्वसमासे द्विवचनेन भाव्यं प्रथमाद्वितीययोर्द्विवचनार्थएव नास्ति सप्तमी चात्र निमित्तार्थेऽवगन्तव्या । मांसभक्षणस्य वर्जनार्थं विधिं वक्ष्यामि, एवं पूर्वोक्तानां ११—२३ पद्यानां वक्ष्यमाणानां २७–४४ पद्यानां च प्रक्षिप्तत्वसिद्धावितः पूर्वं नास्ति मांसभक्षणविषयको विचारोऽग्रेऽपि पूर्वपक्षस्थो विचारः सर्वः खण्डितएवातो मांसभक्षणवर्जनस्यैव विधानं तु क्वापि भक्षणस्येति ॥ २६ ॥

भाषार्थः–(यत्किंचिद्गर्हितं स्नेहसंयुक्तं भक्ष्यं भोज्यम्) जो कुछ वाल, कीड़ा पड़ने वा कुत्ता आदि से दूषित न होने के कारण लोक वा शास्त्रानुकूल निन्दित न हो ऐसा घी आदि चिकनाई के संयोग से पकाया सेव, पापड़ आदि कड़ा भक्ष्य और मोहनभोग आदि कोमल भोज्य ( तत्पर्युषितमप्याद्यम् ) ऐसा वासी धरा हुआ भी अन्न भक्ष्य खाने योग्य है ( हविःशेषं च यद्भवेत् ) और यज्ञ करने से शेष हविष्यान्न थोड़ी चिकनाई से युक्त हो तो भी भक्ष्य है (द्विजातिभिर्यवगोधूमजं सर्वमस्नेहाक्तं चिरस्थितमपि त्वाद्यम्) ब्राह्मण क्षत्रिय वैश्यों को गेहूं

जौ से बना चिकनाई से रहित अधिककाल का धरा हुआ वासी भी सब खा लेना चाहिये (पयसश्चैव विक्रिया) और दूध से बना खीर आदि धरा हुआ अन्न भी भक्ष्य है । परन्तु कभी २ शीतकालादि में ऐसा धरा अन्न खावे किन्तु ग्रीष्म और वर्षा में वह भी शीघ्र विकारी होजाने से अभक्ष्य है । तथा पूर्वोक्त अगर्हित पद की भी अनुवृत्ति इस में माननी चाहिये कि जो दूषित न हुआ हो ( द्विजातीनामेतद् भक्ष्याभक्ष्यमशेषतउक्तम् ) द्विजातियों के लिये यह पूर्वोक्त भक्ष्याभक्ष्य सब कहा गया ( अतः परं भक्षणवर्जने विधिं प्रवक्ष्यामि ) इस से आगे मांस खाने के निषेध में विधि कहेंगे कि मांस खाना क्यों निषिद्ध है ॥

भा०—अल्पस्नेह युक्त वा सर्वथा स्नेहरहित भी वासी धरा शेष हविष्यान्न भक्ष्य है यही जताने के लिये हविः को यहां पृथक् कहा है । इसी के अनुसार हविष्य से भिन्न अन्न विशेष कर स्नेह से व्याप्त होने पर भक्ष्य माना जायगा वासी अन्न न खाने के उत्सर्गरूप निषेध का यह तो मुख्य अपवाद है सो भी तत्काल पकाये घृतयुक्त पूरी आदि की अपेक्षा धरा हुआ स्नेहयुक्त अन्न भी निकृष्ट वा अभक्ष्य ही माना जायगा पर चिकनाई रहित धरे अन्न की अपेक्षा अच्छा और भक्ष्य होगा । परन्तु जौ गेंहूं से बना रोटी आदि स्नेह रहित भी धरा अन्न मध्य कक्षा में भक्ष्य है क्योंकि अन्य अन्नों की अपेक्षा इन में स्वाभाविक भी चिकनाई अधिक है इसी कारण धरे रहने पर भी अन्यों के समान गेंहूं जौ की रोटी आदि नहीं बिगड़ते पर तत्काल पकाये की अपेक्षा तो ये निकृष्ट ही माने जावेंगे। और धरे चावल दाल आदि की अपेक्षा बीच की कक्षा में भक्ष्य भी माने जायंगे। इस लिये अन्य धरे हुए अन्नों की अपेक्षा गेंहू जौ से बना कोई २ रोटी आदि अन्न कभी २ शीतकालादि में किसी मध्यम के लिये भक्ष्य है जिस को सद्यः पक्व प्राप्त न होसके किन्तु सब को सब समय सब अन्न भक्ष्य नहीं । यहां तक द्विजातियों का भक्ष्याभक्ष्य कहा । अब आगे मांस खाने के निषेध में विधि कहेंगे। यदि यहां भक्षण वर्जन शब्दों का द्वन्द्व समास करें तो द्विवचन विभक्ति होनी चाहिये। और प्रथमा द्वितीया विभक्ति के द्विवचन का अर्थ यहां घटता नहीं इस लिये निमित्तार्थ में सप्तमी विभक्ति माननी चाहिये कि भक्षण के वर्जनार्थ विधि कहेंगे। इस प्रकार पूर्व कहे ११ से २३ तक और आगे कहे २६ से ४४ तक श्लोकों के प्रक्षिप्त ठहर जाने पर इस से पूर्व मांसविषयक विचार आता है ही नहीं इसी से (अब मांस के विषय में कहेंगे ऐसी प्रतिज्ञा करना बन सकता है और यदि पूर्व से ही मांस के विषय में विचार चला मानें तो (अब

हैंगी ) ऐसा कथन प्रमत्तवाक्य के समान होजावे । और आगे भी पूर्वपक्षस्थ विचार का उत्तरपक्ष में स्वयं खण्डन करेंगे इस कारण निषेध का ही विधान है भक्षण का नहीं ॥ २६ ॥

[ प्रोक्षितंभक्षयेन्मांसं–ब्राह्मणानांचकाम्यया ।
यथाविधिनियुक्तस्तु–प्राणानामेवचात्यये ॥
प्राणस्यान्नमिदंसर्वं–प्रजापतिरकल्पयत् ।
स्थावरंजङ्गमंचैव–सर्वंप्राणस्यभोजनम् ॥
चराणामन्नमचरा–दंष्ट्रिणामप्यदंष्ट्रिणः ।
अहस्ताश्चसहस्तानां–शूराणांचैवभीरवः ॥
नात्तादुष्यत्यदन्नाद्यान्–प्राणिनोऽहन्यहन्यपि ।
धात्रैवसृष्टाह्याद्याश्च–प्राणिनोऽत्तारएवच ॥
यज्ञायजग्धिर्मांसस्ये–त्येषदैवोविधिःस्मृतः ।
अतोऽन्यथाप्रवृत्तिस्तु–राक्षसोविधिरुच्यते ॥
क्रीत्वास्वयंवाप्युत्पाद्य–परोपकृतमेववा ।
देवान्पितॄंश्चार्चयित्वा–खादन्मांसंनदुष्यति ॥
नाद्यादविधिनामांसं–विधिज्ञोऽनापदिद्विजः ।
जग्ध्वाह्यविधिनामांसं–प्रेत्यतैरद्यतेऽवशः ॥
नतादृशंभवत्येनो–मृगहन्तुर्धनार्थिनः ।
यादृशंभवतिप्रेत्य–वृथामांसानिखादतः ॥
नियुक्तस्तुयथान्यायं–योमांसंनात्तिमानवः ।
सप्रेत्यपशुतांयाति–संभवानेकविंशतिम् ॥
असंस्कृतान्पशून्मन्त्रै–र्नाद्याद्विप्रःकदाचन ।
मन्त्रैस्तुसंस्कृतानद्या–च्छाश्वतंविधिमास्थितः ॥

कुर्याद्घृतपशुंसङ्गे-कुर्यात्पिष्टपशुंतथा ।
नत्वेवतुवृथाहन्तुं-पशुमिच्छेत्कदाचन ॥
यावन्तिपशुरोमाणि-तावत्कृत्वोहमारणम् ।
वृथापशुघ्नःप्राप्नोति-प्रेत्यजन्मनिजन्मनि ॥
यज्ञार्थंपशवःसृष्टाः-स्वयमेवस्वयंभुवा ।
यज्ञस्यभूत्यैसर्वस्य-तस्माद्यज्ञेवधोऽवधः ॥
ओषध्यःपशवोवृक्षा-स्तिर्यञ्चःपक्षिणस्तथा ।
यज्ञार्थंनिधनंप्राप्ताः-प्राप्नुवन्त्युच्छ्रितीःपुनः ॥
मधुपर्केचयज्ञेच-पितृदैवतकर्मणि ।
अत्रैवपशवोहिंस्या-नान्यत्रेत्यब्रवीन्मनुः ॥
एष्वर्थेषुपशून्हिंसन्-वेदतत्त्वार्थविद्द्विजः ।
आत्मानंचपशुंचैव-गमयत्युत्तमांगतिम् ॥
गृहेगुरावरण्येवा-निवसन्नात्मवान्द्विजः ।
नावेदविहितांहिंसा-मापद्यपिसमाचरेत् ॥
यावेदविहिताहिंसा-नियतास्मिंश्चराचरे ।
अहिंसामेवतांविद्या-द्वेदाद्धर्मोहिनिर्बभौ ॥ ४४ ॥ ]

अ०-प्रोक्षितं यज्ञे मन्त्रैः पूतम्, नियुक्तः शास्त्रतः प्राप्तानुज्ञः, अत्यये-भक्ष्येऽनुपलब्धे प्राणेषु निःसरत्सु-चराणां मनुष्यादीनामचराः स्थावरा वृक्षादयोऽन्नम्, दंष्ट्रिणामतिशयेन छेदनसाधना दशना येषां विद्यन्ते तेन सामान्यदशनवतां हरिणादीनां व्यावृत्तिः सिंहादीनां चोपादानम्, अदंष्ट्रिणो हरिणादयः, सहस्तानां मनुष्यादीनामहस्ता मत्स्यादयोऽन्नम् । अत्ताऽऽद्यान् प्राणिनोऽहन्यहन्यप्यदन्न दु-

ष्यति यतोऽत्तार आद्याश्च धात्रैव सृष्टाः। परोपकृतं परेणान्येनानीय प्रत्तम्, विधिज्ञो द्विजोऽनापद्यविधिनामांसं नाद्यादपित्वनापदि विधिनाऽद्यादापदि चाविधिनाप्यद्यादित्येतद्द्वयमर्थादापद्यते। वृथा यज्ञमन्तरेण खादतो हन्तुरपेक्षयापि पापाधिक्यम्। नियुक्तस्तु यथान्यायमित्ययं निन्दार्थवादः। सङ्गे यज्ञे घृतपशुं कुर्यात्पशुविकारभूतं घृतमेव पशुस्तं पिष्टमेव पशुरूपं वा कुर्य्यात्। वृथा पशुं हन्तुमन्यथा सिद्धेऽपि प्रयोजने कदापि न त्वेव त्विच्छेत्। वृथा पशुघ्नः प्रेत्य जन्मनि जन्मनि यावन्ति म्रियमाणस्य पशोरोमाणि भवन्ति तावत्कृत्वस्तावद्वारं मारणं ह्यावश्यं प्राप्नोति। निधनं मरणमुच्छ्रितीरुत्कृष्टा जातीः। अवेदविहितां हिंसां नाचरेदपितु वेदविहितां कामं समाचरेदित्यर्थापत्तिः। सुखेन ज्ञातुं शक्यमन्यत्॥

भा०–इमान्यष्टादश पद्यानि केषामप्यन्येषां मतप्रकाशनपराणि पूर्वपक्षत्वेन ग्रन्थकृता धृतानि, अतएवोत्तरपक्षे सर्वथैव मांसभक्षणनिषेधं वक्ष्यति। यत्र हि पूर्वकथनादपरं कथनं सकारणं भिद्यते तत्र भवत्येव पक्षद्वयम्। अतो यज्ञे मांसप्रयोगो भक्षणं वा कार्यमिति नेदं मनोर्भृगोर्वा मतमपि त्वहिंसाधर्ममर्माविजानतः कस्याप्यन्यस्यैवेदं कथनमिदम्। तथाचोक्तं महाभारतमोक्षधर्मपर्वणि "सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्। कामकाराद्विहिंसन्ति बहिर्वेद्यां पशून्नराः"॥ ग्रन्थनिर्माणादनन्तरं वा कैश्चिन्मांसभक्षणलोलुपैर्हिंसाऽत्र यज्ञमिषेण प्रवेशिता। पक्षद्वयेऽपि सिद्धानुवाद-

रूपं प्राणस्यान्नमित्यादिपद्यद्वयं मांसभक्षणपोषणाया
लिखितमतो हेयत्वमापद्यते । यदि चैतदेव पद्यद्वयमन्य
त्रोपलभ्येत तदा नैव हेयं स्यात् । यथा च स्तेना अस्तेनाश्च
पदार्थाश्च धात्रैव सृष्टास्तथापि धातृसृष्टत्वहेतोश्चौरा निर्दो
षा न भवन्ति तथैव धातृसृष्टत्वं मांसभक्षणदोषापगमे हे
तुर्न सम्भवति । एवं यद्यपि विशिष्टहिंसाऽपवित्रतादिदो
षयुक्तमांसभक्षणापेक्षया कस्याप्यल्पहिंसादिदोषयुक्तं मां
सभक्षणं दैवरूपमस्तु तथापि मांसत्यागापेक्षया तस्य सर्व
स्यैव राक्षसविधित्वमस्त्येव । एवं च न यज्ञमिषेण मांस
भक्षणं कदापि दैवं सम्भवति । सर्वत्रैव मांसत्यागापेक्षया
भक्षणं तस्य दोषकरमधर्मजनकं चेति सर्वानुमतं सुस्थि
चैषां पद्यानां कथमपि प्रक्षिप्तत्वाभावपक्षेऽपीति सिद्धान्तो
व्याहतः ॥ ४४ ॥

भाषार्थः–( यथाविधि नियुक्तस्तु ) शास्त्रोक्त नियम से बद्ध हुआ गृहस्थ
पुरुष (प्रोक्षितं मांसं भक्षयेत्) यज्ञ में मन्त्रों से पवित्र किये मांस को खावे (ब्रा
ह्मणानां च काम्यया ) ब्राह्मणों की कामना से–खाने की आज्ञा जताने से और
(प्राणानामेव चात्यये) खाने को कुछ न मिलने पर प्राण निकले जाते हों तो इन
तीन दशाओं में मांस खालेवे ( प्रजापतिरिदं सर्वं प्राणस्यान्नमकल्पयत् ) प्रजा
पति परमात्मा ने इस सब रयिपद वाच्य संसार को प्राण का अन्न नाम भोजन
नियत किया है ( स्थावरं जङ्गमं चैव सर्वम्प्राणस्य भोजनम् ) अर्थात् स्थावर-
अचर और जङ्गम चर सभी प्राण नाम तैजस शक्तिरूप जाठराग्नि का भोजन है
कोई किसी को और कोई किसी को खाता है इस प्रकार सभी खाने वाले और
सभी खाये जाते हैं । उन में प्राण भक्षक और रयि भक्ष्य है (चराणामचरा अन्नम्)
मनुष्य वा गौ आदि चर प्राणियों का स्थावर ओषधि वनस्पति घास तृणादि
अन्न है ( दंष्ट्रिणामप्यदंष्ट्रिणः ) प्रबल वा बड़े २ दांतों–डाढ़ों वाले सिंह व्याघ्र
भेड़िया, बिल्ली आदि का निर्बल वा छोटे दांतों वाले हिरण, भेड़ी, बकरी आ

मूषा आदि अन्न नाम भक्ष्य है । अतिशयार्थ में मत्वर्थ इन् प्रत्यय होने से सामान्य दांतों वाले हिरन आदि यहां दंष्ट्री नहीं कहाते (महस्तानामहस्ताश्च) हाथों वाले नाम पकड़ने की अच्छी प्रबल जालादि शक्ति रखने वाले मनुष्यादि का अन्न बिन हाथों वाले मछली आदि जीव जन्तु हैं (शूराणां चैव भीरवः) शूर नाम बलवान् हिंसकों का अन्न भीरु डरपोक प्राणी हैं (आद्यान्प्राणिनोऽहन्यहन्यपदन्नत्ता न दुष्यति) मांस खाने वाला खाने योग्य प्राणियों को प्रति दिन खाता हुआ भी दोषी वा पापी नहीं होता (हि) क्योंकि (आद्याश्च प्राणिनोऽत्तारएव च धात्रैव सृष्टाः) भक्ष्य तथा भक्षक दोनों प्रकार के प्राणी धाता विधाता ईश्वर ने ही रचे हैं [इस का आशय यदि यह माना जाय कि मनुष्य का भक्ष्य ओषधि फल—अन्न, कन्द, मूल, शाकादि हैं, सिंह के भक्ष्य मृग, बिल्ली के भक्ष्य मूषे इत्यादि प्रकार जो २ जिस २ का भक्ष्य है वह २ उसी २ से जीवित रह सकता है इस-कारण जिस का जो भक्ष्य है वह उस के लिये निषिद्ध होता तो ईश्वर उस २ का वह २ भक्ष्य क्यों नियत करता इस कारण अपना २ भक्ष्य उस २ को खानेमें दोष वा पाप नहीं है जानो उस २ प्राणी को वह २ खावे यह ईश्वर की आज्ञा ही है इस कारण उस २ को दोष नहीं तो यह श्लोक निर्दोष माना जासकता है] ( यज्ञाय मांसस्य जग्धिः ) यज्ञ करने में मांस का खाना ( इत्येष दैवो विधिः स्मृतः) यह दैव नाम उत्तम विधि-आज्ञा मानी गई है ( अतोऽन्यथाप्रवृत्तिस्तु राक्षसो विधिरुच्यते ) इस से भिन्न लालच आदि से मांस खाना अर्थात् केवल खाने के लोभ से हिंसा करना कराना राक्षसी विधान वा रीति है ( क्रीत्वा स्वयं वाप्युत्पाद्य ) किसी से मूल्य दे मांस लेकर वा स्वयं मार के सम्पादित किये मांस को ( परोपकृतमेव वा ) वा किसी ने लाकर दिये मांस को ( देवान् पितृंश्चार्चयित्वा ) होम वा श्राद्ध करने पश्चात् ( मांसं खादन्न दुष्यति ) मांस को खाता हुआ पुरुष दूषित नहीं होता (विधिज्ञो द्विजोऽनापद्यविधिना मांसं नाद्यात् ) कहां किस का मांस खाने की आज्ञा है कहां नहीं इस को जानने वाला ब्राह्मणादि द्विज आपत्काल से भिन्न समय में यज्ञ वा श्राद्ध किये विना मांस न खावे किन्तु आपत्काल न होने पर यज्ञ में मांस खावे और आपत्काल में यज्ञ किये विना भी प्राणरक्षार्थ मांस खालेवे यह दो प्रकार का विचार यहां अर्थापत्ति से सिद्ध है ( अविधिना मांसं जग्ध्वा ) यज्ञ किये विना जिन प्राणियों का मांस यहां खाता है (तैरवशः प्रेत्याद्यते) जन्मान्तर में उन्हीं प्राणियों.

पीढ़ी कुटुम्ब में हो तो वहां यह विशेषता उशना की स्मृति में लिखी है कि "थोड़े आशौच नाम तीन चार आदि दिन मानने योग्य अशुद्धि के भीतर वा जनन की अशुद्धि के भीतर बड़ी अशुद्धि किसी अच्छे का मरण हो तो वहां पिछले के साथ में द्वितीय की शुद्धि न होनी चाहिये। जैसे कोई ऐसा बालक मरा जिस की पूर्व कथनानुसार तीन दिन अशुद्धि मानी जावे अथवा कोई बालक जन्मा तो उस की शुद्धि न हो जाने से पूर्व ही कोई मनुष्य मर जावे तिस की दश दिन अशुद्धि मानी जानी चाहिये तो वहां पूर्व के साथ में द्वितीय मरण की शुद्धि नहीं होनी चाहिये किन्तु वहां दूसरे की शुद्धि पूरे दश दिन होने पर मानी जावे और उसी के साथ पहिले की भी शुद्धि हो, और अङ्गिरा की स्मृति में भी कहा है कि-"जन्म में मरण वा मरण में जन्म पहिले की शुद्धि न होने तक हो जाय तो वहां मृतक के साथ में सूतक की शुद्धि करे किन्तु सूतक के साथ मृतक की शुद्धि न होनी चाहिये" और षट्त्रिंशन्मत में भी लिखा है कि "गमी हो जाने पर दश दिन के भीतर किसी का जन्म हो तो वहां गमी के साथ में जन्म की शुद्धि होगी किन्तु जन्म के साथ मरण की नहीं। और यदि जन्म में जन्म वा मरण में मरण हो तो पहिले के जितने दिन शेष हों उसी में दोनों की शुद्धि करली जावे और पहिली अशुद्धि का एक ही दिन बाकी रह गया हो तो पिछले को तीन दिन बढ़ा के दोनों की शुद्धि करलेवे। यदि माता पहिले मरे और उस की शुद्धि होने से पूर्व पिता भी मर जाय तो माता के दशवें दिन प्रथम पिता की शुद्धि करके डेढ़ दिन में माता की शुद्धि हो जावे। यहां प्रथम पक्ष में पूर्व मृत्यु काल के साथ पीछे मरे की शुद्धि हो जावे और इसी पक्ष के साथ माता पिता दोंनो के मरने में विशेषता है। द्वितीय पक्ष में पहिले जनन शौच के साथ परजनन की भी शुद्धि हो और तीसरे चौथे पक्ष में गमी के साथ में जनन की भी शुद्धि हो जानी चाहिये ॥७९॥

**त्रिरात्रमाहुराशौच-माचार्येसंस्थितेसति।**
**तस्यपुत्रेचपत्न्यांच दिवारात्रमितिस्थितिः ॥**
**श्रोत्रियेतूपसम्पन्ने-त्रिरात्रमशुचिर्भवेत्।**
**मातुलेपक्षिणींरात्रिं शिष्यर्त्विग्बान्धवेषुच।**

प्रेते राजनि सज्योति-र्यस्य स्याद्विषये स्थितः ।
अश्रोत्रिये त्वहः कृत्स्न-मनूचाने तथा गुरौ ॥
शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥८३॥

[ क्षत्रविट्शूद्रदायादाः स्युश्चेद्विप्रस्य बान्धवाः ।
तेषामशौचं विप्रस्य दशाहाच्छुद्धिरिष्यते ॥
राजन्यवैश्ययोश्चैवं हीनयोनिषु बन्धुषु ।
स्वमेव शौचं कुर्वीत विशुध्यर्थमिति स्थितिः ॥
विप्रः शुध्येद्दशाहेन जन्महानौ स्वयोनिषु ।
षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥
सर्वे चोत्तमवर्णास्तु शौचं कुर्युरतन्द्रिताः ।
तद्वर्णविधिदृष्टेन स्वन्तु शौचं स्वयोनिषु ॥ ४ ॥ ]

अ०—उपपन्ने मैत्रीभावादिनातिसमीपस्थे सहवासिनि श्रोत्रिये संस्थिते त्रिरात्रम् । शिष्येषु—ऋत्विक्षु, बान्धवेषु पितृस्वसृमातृस्वसृसुतादिषु संस्थिते पूभयतो दिनद्वययुक्ता मेकां रात्रीमशुचिः स्यात् । यस्य विषये राज्यदेशे स्थितः स्यात् तस्मिन् राजनि प्रेते सज्योतिराशौचं स्यात् । रात्रौ दिवसे वा यत्र राजा म्रियेत तस्मिन्नेवान्त्ये शौचं विदधीत । अश्रोत्रिये ऽनूचाने साङ्गवेदाध्यापयितरि तथा गुरौ वेदार्थव्याख्यातरि संनिहिते च संस्थिते कृत्स्नमहो न तु रात्राववाशौचम् । त्र्यशीतितमपद्याग्रेऽत्र चत्वारि पद्यानि पश्चात् कैश्चित् क्षिप्तानि केषुचिदेव पुस्तकेषूपलभ्यन्ते । तेषामर्थः प्राकृते द्रष्टव्यः ॥ ८३ ॥

भा०—आचार्योऽपि गौण्या वृत्त्या गुरुपदवाच्यः। यदा शिष्येणैव तस्यान्त्येष्टिः क्रियते तदा दशाहमाशौचं पूर्वमुक्तम्। अत्र तु श्रवणमात्रेण त्रिरात्रमाशौचं मन्तव्यम्। पूर्वं चतुरहाद्याशौचकथनं ब्राह्मणस्यैव दशाभेदेन भिन्नं बोध्यम्। क्षत्रियादीनान्तु सामान्येन द्वादशाहादिरेवाशौचकालः। यथा च नीतिज्ञा मन्यन्ते—"न स्वे सुखे वै कुरुते प्रहर्षं, नान्यस्य दुःखे भवति प्रहृष्टः।" अपित्वन्यस्य दुःखे यथायोगं दुःखितेन भाव्यमन्यस्य दुःखमपि दुःखं मत्वैव तस्य सहायो दयार्द्रचेताश्च भवति। अयं च दयामूलो धर्मएवास्ति तस्मादसपिण्डश्रोत्रियादिपुरुषे विपन्ने शोकरूपमाशौचं कुर्वाणस्य श्रोत्रियादित्वेन सह प्रीतिः प्रतीयते। आशौचकाले कामक्रोधलोभादिदोषेभ्योऽपि निवर्त्तते तेन चाधर्मान्निवृत्तिर्धर्ममार्गे च प्रवृत्तिरिति सर्वमेव शावाशौचं सुखस्य कारणमनिष्टवारकं च। क्षत्रियादयस्तु ज्ञानस्याप्राधान्यान्न विप्रवत्सद्यःशोकं हातुं शक्ताइति मत्वा तदर्थं कालाधिक्यमुक्तम्। शूद्रस्तु सर्वापेक्षया मूढस्तस्यापि मासपरिमितः कालः शोकमपगमयति ॥८३॥

भाषार्थः—( आचार्ये संस्थिते सति त्रिरात्रमाशौचमाहुः ) उपनयन कराके वेद पढ़ाने वाले आचार्य—गुरु के मर जाने पर शिष्य को तीन दिन अशुद्धि माननी चाहिये [ यदि आचार्य का दाह कर्म अन्य के अभाव में शिष्यही करे तो ६५ श्लोक में लिखे अनुसार उस को दश दिन आशौच मानना चाहिये ] ( तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ) उस आचार्य के पुत्र और पत्नी के मर जाने पर शिष्य को एक दिन रात गमी मनानी चाहिये (उपसंपन्ने श्रोत्रिये तु त्रिरात्रमशुचिर्भवेत् ) संहवासी मित्र समीपस्थ श्रोत्रिय वेदाध्येता किसी विद्वान् के मर जाने पर तीन दिन और ( मातुले शिष्यर्त्विग्बान्धवेषु च

पक्षिणीं रात्रिम् ) मामा, शिष्य, अपने ऋत्विज्-पुरोहितादि, बुआ वा मौसी
पुत्रादि वा श्वशुर साले आदि के मर जाने पर दो दिन एक रात गमी मानने
चाहिये (यस्य विषये स्थितः स्याद्राजनि प्रेते सज्योतिः) जिस के राज्य में बसता
हो उस राजा के मर जाने पर जब मृत्यु हो उस दिन भर वा रात्रि भर गमी
माननी चाहिये ( अश्रोत्रिये त्वनूचाने तथा गुरावहः कृत्स्नम् ) वेद से भिन्न ग्र-
न्थों के ज्ञाता साङ्गोपाङ्ग वेद के अध्यापक और सामान्य गुरु जिस से थोड़ा
भी शास्त्र पढ़ा हो ऐसे लोगों के मरने पर उन के साथ विशेष मेल वा सम्ब-
न्ध न होने पर भी एक दिन मात्र गमी माने (दशाहेन विप्रःशुध्येत्) साधारण
मध्यम कोटि का ब्राह्मण सामान्यदशा में दश दिन (द्वादशाहेन भूमिपः) क्षत्रिय
बारह दिन (वैश्यःपञ्चदशाहेन) वैश्य पन्द्रह दिन और (शूद्रो मासेन शुध्यति) शूद्र
महीने भर अशुद्धि माने। और ग्यारहवें दिन आदि में सब शुद्ध हो जावें। इस से
आगे चार श्लोक पीछे मिलाये किसी २ पुस्तक में मिलते हैं (क्षत्रविट्०) इत्या-
दि उन का अर्थः—[ क्षत्रिय वैश्य और शूद्र यदि ब्राह्मण के सम्बन्धी हों अ-
र्थात् ब्राह्मण ने क्षत्रियादि की कन्या के साथ विवाह किया हो तो उन क्ष-
त्रिय कन्यादि में उत्पन्न हुए पुत्रादि के मरने पर ब्राह्मण को दश दिन शुद्धि
माननी चाहिये । और क्षत्रिय वैश्य शूद्र कन्याओं सम्बन्धी श्वशुर साले आदि
के मरने पर भी अपनी शुद्धि के लिये ब्राह्मण स्वयमेव शौच करे। अपने सजातीय
ब्राह्मण सम्बन्धियों में मरने पर ब्राह्मण दश दिन गमी माने । क्षत्रिय सम्ब-
न्धी के मृत्यु में ६ दिन वैश्य के मृत्यु में तीन दिन और शूद्र सम्बन्धी के मृत्यु
में एक दिन अशुद्धि माने । उत्तम वर्ण वाले सभी लोग निरालस्य हो के शुद्धि
करें और शूद्र वर्ण तो प्रारब्ध वश अच्छा हो तो अपनी जाति में स्वयं शुद्धि ठी-
क २ करेगा। ब्राह्मण पुरुष क्षत्रियादि कन्याओं से विवाह करे यह एकदेशी नी-
च पक्ष है जो ऐसा करे उस के लिये एकदेशी आशौच कथन है किन्तु सर्वदेशी
उत्तम पक्ष नहीं है ] ॥

भा०—आचार्य भी गौण वृत्ति से गुरुपद वाच्य है । जब शिष्य ही आचार्य
की अन्त्येष्टि करे तब उस को दश दिन अशुद्धि माननी चाहिये यह पूर्व कह
चुके हैं । और यहां आचार्य का मृत्यु होना सुन ज्ञान के तीन दिन में शौच
करना कहा है । पूर्व चार दिन आदि अशुद्धि के भेद भिन्न २ दशा में ब्राह्मण
के लिये जानो । और क्षत्रियादि के लिये तो पूर्व कहा सामान्य कर बारह दि-

श्रादि का ही आशौच समय है । जैसे नीतिज्ञ लोग मानते हैं कि "अपने ही सुख में जो हर्ष नहीं करता और न अन्य के दुःख में सुख मानता है वह उत्तम आर्य है" यह दया मूलक धर्म ही है तिस से अपने विजातीय सपिण्ड से भिन्न श्रोत्रियादि पुरुष के मरने पर शोकरूप अशुद्धि मानने वाले की विद्वत्तादि शुभगुणों वा विद्या धर्म के साथ प्रीति प्रतीत होती है । अशुद्धि वा शोक मानने के समय काम क्रोध लोभादि दोषों से भी मनुष्य वचता है इस कारण अधर्म से निवृत्ति और धर्म में रुचि वा प्रवृत्ति होती इस से सभी गमी की अशुद्धि मानना सुख का कारण और अनिष्ट दुःख का निवारक होता है । और क्षत्रियादि लोग ज्ञान के कम होने से ब्राह्मण विद्वान् के तुल्य शोक को शीघ्र नहीं त्याग सकते ऐसा मान कर ही उन के लिये अधिक अशुद्धि मानना कहा है । और सब की अपेक्षा अधिक मूढ़ शूद्र कहाता है उस का भी महीना भर का समय धीरे २ शोक को निवृत्त कर देता है । कभी कहीं किसी ब्राह्मणादि को भी अधिक और शूद्रादि को भी कहीं कभी कम समय तक अशुद्धि मानने की आवश्यकता अपवादरूप यथावसर हो सकती है ॥ ८३ ॥

नवर्धयेदघाहानि प्रत्यूहेन्नाग्निषुक्रियाः ।
नचतत्कर्मकुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ॥
दिवाकीर्त्तिमुदक्यांच पतितंसूतिकांतथा ।
शवंतत्स्पृष्टिनंचैव स्पृष्ट्वास्नानेनशुध्यति॥
आचम्यप्रयतोनित्यं जपेदशुचिदर्शने ।
सौरान्मन्त्रान्यथोत्साहंपावमानीश्चशक्तितः
नारंस्पृष्ट्वास्थिसस्नेहंस्नात्वाविप्रोविशुध्यति
आचम्यैवतुनिस्स्नेहं गामालभ्यार्कमीक्ष्यवा ॥
आदिष्टीनोदकंकुर्या-दाव्रतस्यसमापनात् ।
समाप्तेतूदकंकृत्वा त्रिरात्रेणैवशुध्यति ॥

वृथासंकरजातानां प्रव्रज्यासु चतिष्ठताम् ।
आत्मनस्त्यागिनांचैव निवर्त्तेतोदकक्रिया ॥
पाषण्डमाश्रितानांच चरन्तीनांचकामतः ।
गर्भभर्तृद्रुहांचैव सुरापीनांचयोषिताम् ॥
आचार्यंस्वमुपाध्यायं पितरंमातरंगुरुम् ।
निर्हृत्यतुव्रतीप्रेतान्न व्रतेनवियुज्यते ॥
दक्षिणेनमृतंशूद्रं पुरद्वारेणनिर्हरेत् ।
पश्चिमोत्तरपूर्वैस्तु यथायोगंद्विजन्मनः ॥८॥

अ०-एकाहाद्यल्पकालिकेऽशौचे विश्रामालस्यादिहेतोरा
स्यमालिन्यरूपाशौचस्य दिनानि न वर्धयेद् दशाहाशौचक
नोरीकुर्यात् । अग्निषु क्रिया न प्रत्यूहेन्न त्यजेत्सद्यः शौ
कृत्वा नैत्यिकं नियमितं कर्म कुर्यादेव । यस्य च कर्मणि
नियमो नास्ति तेन तु शौचानन्तरमेव वा नियतं कर्मानु
ष्ठेयम् । नियतमग्निहोत्रादिकं कर्म कुर्वाणः सनाभ्यः सपि
ण्डोऽन्यो वा न कोऽप्यशुचिर्भवति । शुभकर्मानुष्ठानका
ले चाण्डालादिकं समीपतो दृष्ट्वा यथोत्साहं यथाशक्ति सौ
रान्सूर्यदेवताकान्मन्त्रान्पावमानीश्चर्चो जपेत् । दर्शनमात्रे
ण वायुना सहापि वा काचिदशुद्धिरागच्छति । नारं नरस्य
मनुष्यस्य सस्नेहमस्थि स्पृष्ट्वा स्नायात् । निःस्नेहास्थि
स्पर्शने गां पृथिवीमालभ्य हस्तादिना संस्पृश्य हस्

तदङ्गं वा प्रक्षाल्य च सूर्यदर्शनं कृत्वा शुध्यति। आदिष्टी-आदिष्टव्रतानुष्ठायी ब्रह्मचारी मध्ये चान्द्रायणादिव्रतमारभमाणो वा जनो व्रतस्यासमापनादुदकमुदकेन विशिष्टशौचमपि न कुर्यात्। समाप्ते तु व्रते, उदकं कृत्वा त्रिरात्रेण शुध्यति। वृथा जाताः पञ्चमहायज्ञादिविहीना नपुंसकाश्च, हीनवर्णेनोत्कृष्टस्त्रीषु व्यभिचारेण जाताः संकरजाताः, प्रव्रज्यासु संन्यासाश्रमकृत्येषु तिष्ठतामात्मनस्त्यागिनां विषभक्षणादिना मृतानामुदकक्रियाऽशौचनियमो दशाहादिनियतो न कार्यः। तेषामाशौचं नैव मन्तव्यम्। वेदबाह्यशैववैष्णवादिपाषण्डमतलिङ्गधारिणां स्त्रीपुरुषाणां, कामतश्चरन्तीनां कुलटानां योषितां, गर्भद्रुहामौषधसेवनादिना गर्भपातिकानां भर्तृद्रुहां भर्तृताडनादिरतानां सुरापानरतानां च योषितां मरणे तत्सम्बन्धिभिराशौचं नैव मन्तव्यम्। स्वस्याचार्यादीन् प्रेतान्व्रती ब्रह्मचारी चान्द्रायणादिव्रतानुष्ठायी वा निर्हृत्य दाहादिकं कृत्वा स्वस्य व्रतेन न वियुज्यते स्वनियमं तथैव पालयेदाशौचलग्नेन तेन व्रतिना व्रतकृत्यं नैव हेयम्। मृतं शूद्रं दक्षिणेन पुरद्वारेण, वैश्यं पश्चिमेन, क्षत्रियमुत्तरेण, ब्राह्मणं च पूर्वेण द्वारेण निर्हरेन्निस्सारयेत्–श्मशानभूमिं नयेत्॥

भा०–यथा मलमूत्रत्यागादीन्यवश्यं कर्त्तव्यानि कर्माणि न केनापि कदापि त्यज्यन्ते तथैव नित्यसन्ध्योपासनादिकर्मणामपि शावाशौचे सूतके वा नास्ति निरोधः। चाण्डालादिजनानामशुद्धिः समीपतइन्द्रियार्थसंनिकर्षेणाया-

ति स्पर्शेतिसामीप्यादाधिक्येनागच्छति तत्र स्नानं दर्शना दौ न्यूनागमने मनोग्लानिनिवृत्तये मन्त्राणां जपउक्तः। गो पृथिव्याः स्पर्शः सूर्यस्य दर्शनं च जलाभावकाले गौणं वि कल्पार्थम् । सूर्यपृथिव्यादितत्त्वानामपिशोधकत्वमनिवा र्यमेव। अत्रोदकक्रियापदेन केचन तर्पणश्राद्धादिकं लोकसिद्धं वर्णयन्ति । स च मृतानन्तरमुदकप्रक्षेपस्य मृतेन सह न कोऽपि सम्बन्धो लक्ष्यते यदि च कथमपि सम्प्रयोजनं सयु क्तिकं चोदकप्रक्षेपणरूपं तर्पणं निष्पद्येत तदा तस्यैवोदकक र्मणः प्रतिषेधोऽस्तु न कापि नो हानिरन्यथोदककर्मपदेन त त्कृतमाशौचं मन्यमानैर्विशिष्टं स्नानं सर्ववासःप्रक्षालनं स र्वगृहस्य मार्जनं लेपनं चेत्यादि सर्वं जलेनैव क्रियमाणमु दककर्म जायते । शोकश्चाग्निगुणस्तस्य च जलेनैव शान्तिः सम्भवात् । वृथाजातादिषु पूर्वतएव प्रीतिर्हीयते तस्मात्त त्र शोकोऽपि न जायते । आचार्यादिभ्योऽन्येषां निर्हरणम पि व्रतिनो न धर्मत उपपन्नमेषां च निर्हरणे व्रतभङ्गो ना स्त्येवं सर्वथा सर्वदैव व्रतभङ्गस्तस्य नेष्यते । व्रतं च शङ्का द्विसर्गादिव देवनियतं कर्त्तव्यमेव जायते न तस्य त्याग शक्यते कर्त्तुम्। यच्च त्यज्यते मध्ये न तद्व्रतपदवाच्यम्। पूर्वादिदिग्भिः सह ब्राह्मणत्वादेः सम्बन्धोऽस्त्येव। पूर्वदि श्यग्निः प्रधानो लोकपालः । आग्नेयो वै ब्राह्मणः । ए वमुत्तरादिदिशा सह क्षत्रियत्वादेरपि सम्बन्धो युक्तएव बो ध्यः । सम्प्रति तु प्रायेण सर्वएव शूद्रीभूता दक्षिणमार्गे णैव मृतान्नयन्ति । यथा च सर्वे वर्णा बहुत्र दशदिनान्ये वाशौचं मन्यन्ते। इयं च शास्त्रविरुद्धान्धपरम्परा बोध्या॥९९॥

भावार्थः-( अघाहानि न वर्धयेत् ) एक दिन आदि अल्प काल में समाप्त हो सकने वाली अशुद्धि वा शोक में विश्राम लेने वा आलस्य से पड़े रहने के लिये दिनों को न बढ़ावे अधिक दिनों तक अशुद्धि मानने का उद्योग न करे अ-र्थात् एक वा तीन दिन के आशौच में दश दिन आदि के कथन को न मान लेवे किन्तु अशुद्धि के दिनों को यथाशक्ति घटाने का उद्योग करे ( अग्निषु क्रिया न प्रत्यूहेत् ) अग्निहोत्रादि नियत कर्म को अशुद्धि के बहाने से न त्यागे किन्तु शीघ्र शुद्धि करके नियत समय पर नित्य कर्म को अवश्य करे। और जिस का अग्नि-होत्रादि ठीक नियम से न चलता हो उस को गमी में अग्निहोत्रादि न करना चाहिये किन्तु शुद्धि करके वह सन्ध्यादि करे (तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्नैव भवेत् ) उस नियमित अग्निहोत्रादि कर्म को करता हुआ सपिण्डस्थ मनुष्य भी सम्बन्धी के मृत्यु में अपवित्र नहीं होता (दिवाकीर्त्तिमुदक्यां च) दिन में पुकार कर चलने वाले चाण्डाल [ महतर ] रजस्वला स्त्री ( पतितं सूतिकां तथा) महापातकी वा उपपातकी जो पापी होने से जातिबाह्य किया गया हो, दश दिन के भीतर सूतिका स्त्री (शवं तत्स्पृष्टिनं चैव) मुर्दा शरीर और मुर्दा को छूने वाला इन सबका (स्पृष्ट्वा स्नानेन शुध्यति) स्पर्श करके मनुष्य स्नान करने से शुद्ध होता अर्थात् इन सब को छूकर स्नान करना चाहिये ( अशुचिदर्शने प्रयत आचम्य) और शुभ कर्म का आरम्भ करने पर वा करते समय इन भङ्गी आदि सब अपवित्रों का समीप से दर्शन होजाय तो सावधान हो आचमन करके ( यथोत्साहं यथाशक्ति सौरान् मन्त्रान् पावमानीश्च नित्यं जपेत्) उत्साह पूर्वक यथाशक्ति सूर्य देवता वाले [उदुत्यं जातवेदसं०] आदि मन्त्रों का तथा पवमानसूक्तों के मन्त्रोंका उक्त अवसरों पर नित्य जप किया करे (नारं सस्नेहमस्थि स्पृष्ट्वा विप्रः स्नात्वा शुध्यति) मांस मज्जादि लगी हुई मनुष्य की हड्डी को छूकर ब्राह्मण स्नान करे तो शुद्ध होता और (निस्नेहं तु आचम्यैव गामालभ्यार्कमीक्ष्य वा) सूखी हड्डी के छूने पर हाथ में मट्टी लगाके धोवे और आचमन करके सूर्य का दर्शन वा मन से स्मरण करके शुद्ध होता यदि जल हाथ धोने को न मिले तो केवल हाथ मटिया कर सूर्य का दर्शनमात्र करले इसी पक्षान्तर को जताने के लिये यहां वा पढ़ा है (व्रतस्यासमापनादादिष्टी नोदकं कुर्यात्) शास्त्र में आज्ञा दिये हुए व्रत को करने वाला ब्रह्मचारी वा बीच२ चान्द्रायणादि व्रत करने वाला गृहस्थ पुरुष किसी सम्बन्धी के मरने पर व्रत पूरा होने से पहिलें व्रतक्रिया को छोड़कर गमी

न मनावे अर्थात् जल सम्बन्धिनी नई शुद्धि न करे (समाप्ते तूदकं कृत्वा त्रिरात्रेण शुध्यति) और व्रत के समाप्त होने पर उदक क्रिया करके तीन ही दिन में शुद्ध होजाता है [ जैसे किसी ने सात वा बारह दिन का व्रत किया हो उस के बीच में किसी का मृत्यु हो जावे तो व्रती अपने व्रत को न त्यागे और व्रत समाप्त होने पर तीन दिनगमी मान लेवे] (वृथासंकरजातानां प्रव्रज्यासु च तिष्ठताम्) धर्मार्थ काम मोक्षों में से कोई भी जिस को प्राप्त नहीं हुआ बकरी के गले में निकले थन के तुल्य उस का जन्म व्यर्थ है, वा नपुंसक-हिजड़ा व्यभिचार से उत्पन्न हुए, संन्यासी होगये (आत्मनस्त्यागिनां चैव निवर्त्ततोदकक्रिया) विष खाके वा अन्य किसी प्रकार स्वयं आत्मघात करके मर जाने वाले मनुष्यों की गमी सम्बन्धियों को नहीं माननी चाहिये अर्थात् दश दिन आदि की अशुद्धि का नियम ऐसों के मरने पर मानना आवश्यक नहीं है ( पाषण्डमाश्रितानां च चरन्तीनां च कामतः ) वेद विरुद्ध शैव वैष्णवादि पाखण्डमतों के चिह्नधारी मनुष्य पुरुषों, स्वेच्छा से विचरने वाली व्यभिचारिणी स्त्रियों ( गर्भभर्त्तृद्रुहां चैव सुरापीनां च योषिताम्) गर्भ गिराने वाली तथा पति से वैर विरोध करने वाली और मद्य पीने वाली स्त्रियों के मरने पर उन के पूर्व सम्बन्धियों को गमी नहीं माननी चाहिये [ अर्थात् पुण्यात्माओं का शोक मानने से अन्तःकरण में पुण्य के संस्कारों की पुष्टि होती है वैसे पापियों का शोक माने तो पाप के संस्कार ( बलिष्ठ होंगे । इस से अच्छों के ही मरण में अशुद्धि मानना ठीक धर्मानुकूल है ] (स्वमाचार्यमुपाध्यायं पितरं मातरं गुरुम्) अपना संस्कार कराके वेद पढ़ाने वाले आचार्य, वेतन लेकर सामान्य ग्रन्थ पढ़ाने वाले उपाध्याय पिता माता और गुरु ( प्रेतान् व्रती निर्हृत्य तु व्रतेन न वियुज्यते ) इन सब मरे हुओं को ब्रह्मचारी वा चान्द्रायणादि व्रत का अनुष्ठान करने वाला व्रतधारी पुरुष ले जा के दाहादि क्रिया कर के भी अपने व्रत से च्युत नहीं होता किन्तु इन की अन्त्येष्टि क्रिया कर के भी अपने व्रत का पूर्ववत् ही पालन करे अशुद्धि लगने के भय से अपने व्रत को बीच में कदापि न त्यागे [ क्योंकि संसार अनित्य और धर्म शुद्धस्वरूप होने से नित्य और बड़ा है इस प्रकार यहां भी धर्म की श्रेष्ठता दिखायी है ) ( मृतं शूद्रं दक्षिणेन पुरद्वारेण निर्हरेत्) मरे हुए शूद्र को नगर के दक्षिण दरवाजे से निकाले और ग्रामादि से दक्षिण दिशा में अन्त्येष्टि करे ( पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः ) पश्चिम दरवाजे से

शूद्र को निकाले, उत्तर द्वार से क्षत्रिय को और पूर्व द्वार से ब्राह्मण मुर्दे को निकाल के नगर वा ग्राम से पूर्व में ही अन्त्येष्टि क्रिया करे ॥

भा०—जैसे अवश्य करने पड़ते मल मूत्र त्यागादि नियत कर्मों को कोई कभी गमी आदि के समय भी त्याग नहीं सकता वैसे नियत सन्ध्योपासनादि कर्मों की भी गमी के समय रुकावट नहीं है। चाण्डालादि मनुष्यों की अशुद्धि समीप मैल-संग होने से कीच के समान आकर लगती है स्पर्श होने में अति समीपता के कारण अधिक अशुद्धि लगती है इस से वहां स्नान करना कहा, और देखने आदि में कम अशुद्धि आती है इस से वहां मन की ग्लानि मेटने के लिये मन्त्रों का जप कहा है। गौ नाम पृथिवी का स्पर्श और सूर्य का दर्शन जल के अभाव में विकल्पार्थ गौण है। सूर्य पृथिव्यादि तत्त्व शोधन के हेतु अवश्य हैं [ इसी कारण हाथ आदि में मट्टी लगाने से शुद्धि होती और गीले वस्तु आदि कों सुखाने आदि द्वारा भी सूर्य शुद्ध करता तमोगुणरूप अन्धकार का मेटना भी सूर्य से एक बड़ी शुद्धि होती है। जिस में जो स्वाभाविक गुण होता उस को देखने से भी वही गुण चक्षु के किरणों द्वारा देखने वाले में अवश्य आता है इसी कारण जल को देखने से भी कुछ शान्ति शीतलता आंख की किरणों द्वारा मनुष्य में आती है। वैसे अशुद्धि के सूक्ष्मांशों की निवृत्ति के लिये सूर्य का दर्शन अवश्य उपयोगी है ] यहां उदक क्रिया शब्द से कोई लोग लोकप्रसिद्ध तर्पण श्राद्धादि का वर्णन करते हैं सो मरने पश्चात् तर्पणरूप जल छोड़ने का मृतक के साथ कोई सम्बन्ध नहीं दीखता। और यदि सूर्य दर्शन के समान जल छोड़ना रूप तर्पण का युक्तियुक्त कोई अच्छा प्रयोजन सिद्ध हो जाय तो उसी उदकक्रिया का निषेध रहो हमारी कुछ हानि नहीं है। और यदि ऐसा सिद्ध न हो तो उदक क्रिया शब्द से मृतक सम्बन्ध की अशुद्धि मानते हुए पुरुषों का विशेष स्नान करना, सब वस्त्रों का धोना, सब घर का लीपना पोतना छिड़कना धोना, आदि सब कर्म जल से ही होगा इस से यही सब उदकक्रिया मानी जायगी शोक वा सुखाना अग्नि का गुण है उस की शान्ति जल से ही होनी सम्भव है व्यर्थ उत्पन्न हुए नपुंसक वा धर्महीन पतितादि में पूर्व से ही प्रीति कम होती वा नहीं होती इसी से वहां शोक भी नहीं होता। आचार्यादि से भिन्न अन्य मुर्दों का उठाना भी व्रती के लिये धर्मानुकूल युक्त वा उचित नहीं है अर्थात् व्रत करने वाला आचार्यादि से भिन्नों का अन्त्येष्टि कर्म भले ही स्वयं न करे और

इन के उठाने जलाने में व्रत का भङ्ग नहीं होता इस प्रकार सब काल में सर्वथा व्रत की हानि अभीष्ट नहीं है। और मल मूत्र के त्याग के तुल्य अवश्य करने पड़े वैसा ही करे अन्यथा कदापि न हो वही स्वभाव के साथ सम्बद्ध व्रत कहाता है। और जो बीच में छूट जाय वा बदल जाय वह व्रत नहीं होगा। पूर्वादि दिशाओं के साथ ब्राह्मणपन आदि का सम्बन्ध स्पष्ट ही है। पूर्व दिशा में अग्नि प्रधान लोकपाल है और अग्नितत्त्वप्रधान ब्राह्मणपन है। इसी प्रकार उत्तरादि दिशाओं के साथ क्षत्रियपन आदि का युक्त सम्बन्ध जानो। वर्त्तमान समय में प्रायः सभी मनुष्य शूद्रमय हुए दक्षिण मार्ग से दक्षिण दिशा में मुर्दों को ले जाते हैं जैसे कि सभी मनुष्य चारो वर्ण अनेक प्रान्तों में दश ही दिन गमी मानते हैं पर शास्त्रानुसार १० । १२ । १५ । ३० दिन ब्राह्मणादि चारों वर्ण क्रम से गमी माने सो यह सब शास्त्र से विरुद्ध अन्धपरम्परा लोक में चल रही है ॥ ९२ ॥

नराणामघदोषोऽस्ति व्रतिनांनचसत्त्रिणाम्।
ऐन्द्रंस्थानमुपासीना ब्रह्मभूताहितेसदा ॥
राज्ञोमाहात्मिकेस्थाने सद्यःशौचंविधीयते।
प्रजानांपरिरक्षार्थ-मासनंचात्रकारणम् ॥
डिम्बाहवहतानांच विद्युतापार्थिवेनच ।
गोब्राह्मणस्यचैवार्थे यस्यचेच्छतिपार्थिवः ॥
सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्यच
अष्टानांलोकपालानां वपुर्धारयतेनृपः ॥
लोकेशाधिष्ठितोराजा नास्याशौचंविधीयते।
शौचाशौचंहिमर्त्यानां लोकेशप्रभवाप्ययम्।
उद्यतैराहवेशस्त्रैः क्षत्रधर्महतस्यच ।

सद्यः सन्तिष्ठते यज्ञ-स्तथाशौचमिति स्थितिः ।
विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् ।
वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ।
एतद्वोऽभिहितं शौचं सपिण्डेषु द्विजोत्तमाः ।
असपिण्डेषु सर्वेषु प्रेतशुद्धिं निबोधत ॥१००॥

अ०—न्यायासनमध्यासीनानां राज्ञां, चान्द्रायणादिव्रतानुष्ठायिनां ब्रह्मचर्याश्रमस्थानां च, यज्ञदीक्षामाप्तानां च शावाशौचादिदोषस्तत्तत्कार्यबाधको न भवति। इन्द्रस्य जीवात्मनः स्थानमुपासीनाः स्वरूपावस्थाएव शुद्धा महत्त्वभूताः शुद्धिं नार्हन्ति । माहात्मिके राज्यासने स्थाने स्थितस्य राज्ञः सद्यः शौचं विधीयते । यदा कश्चिज्ज्ञातिर्बन्धुर्वा म्रियेत तदानीमेव राज्ञा शौचं कृत्वा विवादनिर्णयाय स्वासने स्थातव्यम् । नतु प्राकृतजनवत्त्र्यहाद्याशौचमास्थेयम्। डिम्बाहवः पारस्परिकं बहुजनसंकुलयुद्धमशस्त्रमराजकं च तेन, विद्युता पार्थिवेन च हतानां, गोब्राह्मणस्य चैवार्थे हतानां तस्य सपिण्डस्थस्य, यस्य च पुरोहितादेः पार्थिवः सद्यः शौचमिच्छति तेषां सर्वेषां सद्यः शौचं विधीयतइति पूर्वेणान्वयः। राज्ञोऽशौचाभावस्य प्रशंसार्थवादो द्वयोः। उद्यतैः शस्त्रैराहवे युद्धे क्षत्रधर्मेण सह हतस्यापराङ्मुखस्य यथा सद्यो यज्ञो यज्ञस्येव स्वर्गफलं सन्तिष्ठते सम्यक् सुस्थिरं भवति तथाऽशौचमपि सद्यः संतिष्ठते दशमादिदिने कृतक्रियो ब्राह्मणएकादशदिने प्रातःकालेऽपः स्पृष्ट्वा, वाहनायुधं

स्पृष्ट्वा क्षत्रियः प्रतोदं रश्मीन् वा स्पृष्ट्वा वैश्यो यष्टिं च स्पृष्ट्वा शूद्रः शुध्यति । यद्वा युद्धे हतानां स्वबान्धवानां शुद्धिं कुर्वाणा ब्राह्मणादयोऽपामुपस्पर्शादिना सद्यः शुध्यन्ति । भृगुराह—हे द्विजोत्तमाः! ऋषयः सपिण्डेषु प्रथैतच्छौचमभिहितमुक्तं सम्प्रति वक्ष्यमाणामसपिण्डेषु प्रेतशुद्धिं निबोधत।

भा०—इन्द्रो विद्युदादिरूपः स्वरूपेणैव सदा शुद्धः। अत एव वेदउक्तम्—"इन्द्र शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः" तस्य च स्थानं शुद्धमेव,वृतिराजसन्निणाश्च शुद्धिस्थानमुपासीना भवन्ति सदा निर्दोषं शुद्धतमं च ब्रह्मातस्ते सर्वे ब्रह्मसन्निहिता ब्रह्मभूता गद्यन्ते । जीवात्मा चेन्द्रपदवाच्यस्तस्य छेदनादिभयराहित्यं स्वरूपेऽवस्थानं सच स्वरूपेऽवस्थितः क्षत्रियोऽपि निर्भयो योद्धुं शक्नोति तदेव राज्ञ ऐन्द्रं स्थानम्। शुद्धिप्राबल्यं प्राप्तांश्च सर्वत्रैवाशुद्धिर्न बाधतेऽतएव राजादीनघदोषा न बाधते। यत्र महानात्मा कामक्रोधलोभादिसंकोचरहितो निर्भयो जायते तन्माहात्मिकं स्थानंन्यायासने स्थितिः। न कस्यापि पक्षं कुर्वन् केनापि न्यायः कर्तुं शक्यते। सोमादयो लोकपाला अतिशुद्धानि तत्त्वानि तदंशप्राधान्येन निर्मितं राज्ञः शरीरं तस्मिन्नाशौचं सद्यो न विशति । यथा च सर्वाधिपतेरीश्वरस्य सापेक्षं शौचाशौचं न भवति किन्तु सदैव शुद्धएव सः । एवं च लोकेशतत्त्वानामधिष्ठानं राजा तस्य नित्यशुद्धत्वाच्छौचावश्यकत्वं नास्ति। यतो लोकेशेभ्यएव मर्त्येषु शौचाशौचं प्रभवति विनश्यति च। एवंभूतेषु व्रतादिवद्धर्म्यकार्येषु विनियुक्तानां सर्वेषामवि

**सद्यःशौचं विज्ञेयम् । अत्र प्रकरणे स्पष्टतयैव सूचितमेतत्-अधिककालीनशौचापेक्षयाऽल्पकालिकशौचस्य प्राशस्त्यम् । धर्मेण चैतद्विशेषतः सम्बद्धं यतो धर्मः शुद्धः ॥१००॥**

भाषार्थः—(राज्ञामघदोषो नास्ति, व्रतिनां न च सत्रिणाम् ) राजा, चान्द्रायणादि व्रतों का अनुष्ठान करने वाले, ब्रह्मचारी और यज्ञ में दीक्षित हुए यजमान को गमी का दोष वा अशुद्धि नहीं लगती ( तेहि सदैन्द्रं स्थानमुपासीना ब्रह्मभूताः ) क्योंकि वे राजादि तीनों इन्द्र नाम जीवात्मा के स्वरूप वा स्थितिरूप शुद्धस्थान को प्राप्त महान् बड़े होते हैं इसी से विशेष शुद्धि करने योग्य हुए अपने २ कार्य को छोड़ नहीं सकते ( राज्ञो माहात्मिके स्थाने सद्यः शौचं विधीयते ) धर्मानुकूल ठीक २ न्याय करने के लिये राजगद्दी पर बैठना राजा के लिये महात्माओं का स्थान है अर्थात् ठीक न्याय करना बड़ी अच्छी उत्तम बुद्धि वालों का काम है । ऐसे राजगद्दी पर बैठे राजा के कुटुम्ब में किसी का मृत्यु हो तो उसी समय राजा को शुद्धि कर लेनी चाहिये क्योंकि ( प्रजानां परिरक्षार्थमासनं चात्र कारणम् ) प्रजा की रक्षा के लिये राजगद्दी पर बैठना ही राजा को शीघ्र शुद्धि करने का कारण है (डिम्बाहवहतानां च) राजसम्बन्ध के विना परस्पर बहुत ग्रामीणादि मनुष्यों के बीच हुई लड़ाई में जो मारे गये ( विद्युता पार्थिवेन च ) विद्युत् के गिरने से मरे और राजाने फांसी आदि देकर मरवाये ( गोब्राह्मणस्य चैवार्थे ) गौ और ब्राह्मण पर आई विपत्ति को हटाने के लिये जिन्हों ने अपना प्राण दे दिया हो ऐसे पुरुषों का मृत्यु शोक करने योग्य नहीं होता तथा ( यस्य च पार्थिव इच्छति ) जिस प्रधान मन्त्री आदि वा पुरोहितादि का शीघ्र शुद्ध हो जाना राजा चाहता है उन सब की तत्काल शुद्धि कर लेनी चाहिये अर्थात् उन का दाहादि कर्म कर के सम्बन्धी लोग उसी समय शरीर घर और वस्त्रादि की शुद्धि कर के अपने २ अन्य कामों में लगें गमी मना के घर में न बैठे रहें ( सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च ) सोम, अग्नि, सूर्य, वायु, इन्द्र–विद्युत्, वित्तपति–कुवेर, अप्पति–वरुण, यमराज ( अष्टानां लोकपालानां वपुर्धारयते नृपः) इन आठ लोकपालों के शुद्धांशों को राजा धारण करता है ( लोकेशाधिष्ठितो राजा नास्याशौचं विधीयते ) राजा के शरीर में लोकपाल शुद्ध तत्त्व देवताओं का प्रधान वास है इस से उस राजा को अशुद्धि लगना नहीं कहा गया (लोकेशप्रभवाप्ययं

शौचाशौचं हि मर्त्यानाम् ) क्योंकि लोकपालों रूप शुद्ध तत्त्व देवताओं से मनुष्यों में शुद्धि अशुद्धि प्रकट वा विनष्ट होती है इस से मनुष्यों को ही शुद्धि अशुद्धि लगती है किन्तु पशु आदि तिर्य्यग्योनियों में भी इतनी कम अशुद्धि लगती है जो अशुद्धि में गिनी भी नहीं जाती अर्थात् मूढ़दशा को प्राप्त और तत्त्वज्ञानी वा अधिक शुद्ध ऐसे ऊपर नीचे दोनों को ही विशेष वा प्रबल शोकादि नहीं सताता इस से अशुद्धि आदि के सब दुःख मनुष्य नामक जीव को कक्षा के लिये ही हैं राजा मनुष्यकोटि में नहीं किन्तु देवकोटि में है (उद्यतैः शस्त्रैराहवे क्षत्रधर्महतस्य च ) उठाये हुए प्रसिद्ध शस्त्रों द्वारा युद्ध क्षेत्र में पीछे को मुख न फेरते हुए धर्मानुकूल युद्धकर के मरे का ( सद्यो यज्ञस्तथा शौचं सन्तिष्ठतइति स्थितिः ) यज्ञ के तुल्य स्वर्ग फल और शुद्धि दोनों काम शीघ्र तत्काल ही प्राप्त हो जाते हैं यह शास्त्र की मर्यादा है ( अपः स्पृष्ट्वा विप्रो वाहनायुधं क्षत्रियः ) दशवें आदि दिन शुद्धि क्रिया कर के ग्यारहवें दिन प्रातःकाल ब्राह्मण जलों का स्पर्श कर क्षत्रिय तेरहवें दिन प्रातः, वाहनरथादि और शस्त्रों का स्पर्श कर (वैश्यः प्रतोदं रश्मीन्वा) वैश्य सोलहवें दिन प्रातः पैन [हांकने के कोड़ा] वा लगाम वा नाथ की रस्सियों का स्पर्श कर और ( कृतक्रियः शूद्रो यष्टिम् ) तीशवें दिन शुद्धि कर्म किया हुआ शूद्र इकत्तीशवें दिन प्रातःकाल लाठी का स्पर्श करके शुद्ध हो जाता है । अथवा इस श्लोक का यह अर्थ भी हो सकता है कि युद्ध में क्षत्रिय की प्रधानता होने पर भी मित्रानुरोधादि विशेष कारणों से जो ब्राह्मणादि युद्ध करने को गये हों । वहां मारे गये ब्राह्मण के सम्बन्धी जल स्पर्श कर, क्षत्रिय के सम्बन्धी वाहन और शस्त्रों का स्पर्श कर, वैश्य युद्धस्थ रथादि को हांकने के कोडा वा लगाम का और शूद्र लाठी का स्पर्शकर तत्काल ही शुद्ध हो जावें और युद्ध करने लगें किन्तु शुद्धि के लिये युद्ध से हटें नहीं । अब भृगु जी कहते हैं कि हे ( द्विजोत्तमाः ! सपिण्डेषु व एतच्छौचमभिहितम् ) द्विजों में उत्तम ब्राह्मण ऋषियो श्रोतालोगो ! हमने सात पीढी सपिण्डविषयक यह शुद्धि का प्रकार तुम लोगों से कहा अब ( सर्वेष्वसपिण्डेषु प्रेतशुद्धिं निबोधत ) आगे कही जानेवाली असपिण्ड कुटुम्बी वा अन्य सब में प्रेत–मृतक शुद्धि सुनो–जानो ॥

भा०—बिजुली आदि नामक इन्द्र अपने स्वरूप से ही सदा शुद्ध है । इसी से वेद में कहा है कि "हे इन्द्र शुद्धस्वरूप तुम हमारी शुद्धि के लिये आओ शुद्ध स्तुति वा रक्षाओं के द्वारा तुम शुद्ध हो इत्यादि„ वह इन्द्र अपने शुद्धस्व-

रूप—स्थान में रहता है। व्रती, राजा और यज्ञ में दीक्षित हुआ यजमान ये तीनों शुद्ध दशा में स्थित होते हैं। और ब्रह्म सदा निर्दोष अत्यन्त शुद्ध है इस से वे सब व्रती आदि ब्रह्म के समीपस्थ होने से ब्रह्मभूत कहे जाते हैं। और जीवात्मा भी इन्द्रपदवाच्य है उस को अपने करने आदि का भय न होना ही अपने शुद्धस्वरूप में अवस्थिति और यही शुद्धि है। वह स्वरूप में अवस्थित हुआ क्षत्रिय भी मरणादि से निर्भय होकर युद्ध कर सकता तथा काम क्रोध लोभादि दोषों से और पक्षपात से रहित हुआ ही शुद्ध राजा ठीक न्याय कर सकता है वही राजा का ऐन्द्र नाम शुद्धिस्थान—शुद्ध दशा है। और प्रबल शुद्ध दशा को प्राप्त सभी पदार्थों को सर्वत्र ही अशुद्धि नहीं दबाती इसी से राजादि को गमी का दोष नहीं लगता। जहां काम क्रोध लोभादि के संयोग से रहित आत्मा नाम बुद्धि निर्भयता से महत्त्व को प्राप्त होती है वह न्यायासन राजगद्दी माहात्मिकस्थान है। किसी का पक्ष करने वा स्वार्थ परता होने पर कोई न्याय नहीं कर सकता। सोमादि लोकपाल अतिशुद्ध तत्त्व हैं उन के अंश की प्रधानता से बने राजा के शरीर में अशुद्धि शीघ्र प्रविष्ट नहीं होती। जैसे कि सर्वाधिष्ठाता ईश्वर को सापेक्ष शुद्धि अशुद्धि नहीं लगती किन्तु वह सदा ही शुद्ध है। इसी प्रकार लोकपालतत्त्वों का आधार राजा है उस के नित्य शुद्ध होनेसे विशेष गमी आदि के शौच की आवश्यकता नहीं है। क्योंकि लोकपाल देवताओं से ही उन के विकाररूप मनुष्य देहों में शुद्धि अशुद्धि उत्पन्न और नष्ट होती है। ऐसे ही व्रतादि के तुल्य धर्मसम्बन्धी उत्तम कार्यों में तत्पर हुए अन्य भी सभी मनुष्यों को शीघ्र शुद्धि कर लेना यहां का आशय है। इस प्रकरण में स्पष्टरूप से ही यह सूचित किया है कि अधिक काल में गमी आदि की शुद्धि करने की अपेक्षा थोड़े काल में शुद्धि कर लेना अच्छा है। धर्म के साथ इस का विशेष कर सम्बन्ध यही है कि धर्म शुद्ध वा जो शुद्ध है वही धर्म है ॥१००॥

**असपिण्डंद्विजंप्रेतं विप्रोनिर्हृत्यबन्धुवत् ।**
**विशुध्यतित्रिरात्रेण मातुराप्तांश्चबान्धवान्॥**
**यद्यन्नमत्तितेषांतु दशाहेनैवशुध्यति ।**
**अनदन्नन्नमन्हैव नचेत्तस्मिन्गृहेवसेत् ॥**

अनुगम्येच्छयाप्रेतं ज्ञातिमज्ञातिमेवच।
स्नात्वासचैलःस्पृष्ट्वाग्निंघृतंप्राश्यविशुध्यति
नविप्रंस्वेषुतिष्ठत्सु मृतंशूद्रेणनाययेत्।
अस्वर्ग्याह्याहुतिःसास्या-च्छूद्रसंस्कारदूषिता
॥ १०४ ॥

अ०-असपिण्डं ब्राह्मणं बन्धुरहितं च प्रेतं ब्राह्मण उत्थाप्य बन्धुवदन्त्यक्रियां कुर्यात् त्रिरात्रं चाशौचं मन्येत। एवं स्वगोत्राद्भिन्नान्मातुः सम्बन्धिनो मातुलादीनाप्तान्सं निहितान्निर्हृत्य त्रिरात्रेण शुध्यति यदि तेषामसपिण्डाना माशौचकालेऽन्नमत्ति तदा दशाहेनैव यदि तेषामन्नमखा दन् गृहे वसति तदा त्रिरात्रेण यदि च तद्गृहवासं तदन्नभक्षणं चोभयं न करोति तदैकेनैवाहोरात्रेण शुद्धो भवितुमर्हति विशेषानुरोधमन्तरेण स्वेच्छया ज्ञातिमज्ञाति वा प्रेतं श्म शानावधि प्रेतहारैः समं गत्वा सवासाः स्नात्वाऽग्निं प्र तप्य घृतं प्राश्य च विशुध्यति। विप्रं ब्राह्मणं क्षत्रियं वा स्वेषु स्वजातिस्थेषु ब्राह्मणादिषु तिष्ठत्सु विद्यमानेषु शूद्रा दिना निकृष्टेन नैव नाययेदपित्वविज्ञातमपि स्वजाती ब्राह्मणादिरेवोत्थाप्य नीत्वा दाहयेत्। शूद्रादिनिकृष्टसंस्प र्शेन दूषिताऽऽहुतिर्दाहक्रिया विद्यमानानामस्वर्ग्याऽसुखहे तुकैव सा लोके परलोके च स्यात्सम्भवति॥

भा०-असगोत्रासपिण्डप्रेतस्य मित्रत्वाद्यनुरोधेन प्रे सम्बन्धिष्वसत्सु वा प्रेतक्रियाऽन्येन गृहिणा सन्निहिते

कार्या तत्र च यथोचितमाशौचं मन्तव्यम् । ब्राह्मणाभावे क्षत्रियस्तदभावे वैश्यस्तदभावे चापदि शूद्रोऽपि ब्राह्मणं क्षत्रियं वा प्रेतं निर्हरेत् । एवं स्वजात्यभावे ब्राह्मणादिरपि प्रेतं क्षत्रियादिमुत्थाप्य दाहयेदिति सर्वमापत्कालोचितं वन्धुत्वैक्यवर्धकमुपकारकं च कृत्यमतो धर्म्यम् ॥१०४॥

भाषार्थः—( विप्रोऽसपिण्डं प्रेतं द्विजं वन्धुवन्निर्हृत्य) ब्राह्मण अपनी सात पीढ़ी से भिन्न किसी विदेश के भी मृतक ब्राह्मण को अपने बन्धु के तुल्य उठवाकर दाहक्रिया कर के (त्रिरात्रेण शुध्यति) तीन दिन गमी की अशुद्धि मानकर शुद्धि करे (मातुराप्तांश्च बान्धवान्) और अपने कुल गोत्र से भिन्न समीप में रहते हुए माता आदि के सम्बन्धी-मामा, नाना, शाले, श्वशुर, मौसा, मौसी आदि के मरने पर भी उन की दाह क्रिया कर तीन दिन गमी माने (यदि तु तेषामन्नमत्ति दशाहेनैव शुध्यति ) यदि उक्त असपिण्डों के घरों में जिन का कोई समीपस्थ मरा हो उन ही का अन्न—पकाया भोजन खावे तो दश दिन ही गमी माने ( अन्नमनदन् चेत्तस्मिन् गृहे न वसेत् ) और यदि उन के घर में भी न वसे न उन का अन्न खावे तो दाह कर एक ही दिन में शुद्ध होता और उन का अन्न न खाता हुआ घर में वसे तो तीन दिन में शुद्ध होता है । विशेष प्रीति वा मेल के विना ( इच्छया ज्ञातिमज्ञातिं वा प्रेतमनुगम्य) अपनी इच्छा से स्वजातीय वा विजातीय मुर्दा के पीछे मुर्दा को लेचलने वालों के साथ श्मशान भूमि तक जावे तो (सचैलः स्नात्वाऽग्निं स्पृष्ट्वा घृतं प्राश्य विशुध्यति ) वस्त्रों सहित स्नान कर अग्नि में शरीर को तपा के और थोड़ा घृत खाकर तत्काल शुद्धि कर लेवे (स्वेषु तिष्ठत्सु मृतं विप्रं शूद्रेण न नाययेत्) अपने स्वजातीय ब्राह्मणों के विद्यमान होते हुए मरे हुए ब्राह्मण क्षत्रियादि को शूद्रादि नीच से न उठवावे किन्तु अपने जातीय अज्ञात को भी ब्राह्मणादि ही उठाकर लेजावें और दाह करें (सा शूद्रसंस्कारदूषिताऽऽहुतिरस्वर्ग्या हि स्यात्) वह शूद्रादि नीच के स्पर्श से दूषित हुई आहुति दाह से क्रिया बचे हुए विद्यमानों के लिये सुख से भिन्न दुःख का हेतु ही लोक पर लोक दोनों में होगी ॥

भा०—गोत्र और सात पीढी से भिन्न सजातीय पुरुष के मरने पर मृतक का सम्बन्धी कोई उठाने वाला न हो तब वा मेल प्रीति आदि के अनुरोध से उस

की दाहक्रिया अन्य समीपस्थ गृहस्थ को करनी चाहिये और वहां यथोचित अ- शुद्धि गमी भी माननी चाहिये । ब्राह्मण के अभाव में क्षत्रिय और उस के अभाव में वैश्य और वैश्य के भी न होने पर शूद्र भी ब्राह्मण मुर्दा को उठा तथा जलावे इसी प्रकार उस २ का स्वजातिस्थ कोई न हो तो ब्राह्मणादि भी मृत क्षत्रियादि को उठा के जलावे यह सब आपत्काल में करने योग्य कृत्य भ्रा- तृभाव से एकता बढ़ाने वाला उपकारक है इसी से धर्मानुकूल जानो ॥ १०४ ॥

ज्ञानंतपोऽग्निराहारो मृन्मनोवार्युपाञ्जनम् ।
वायुःकर्मार्ककालौच शुद्धेःकर्त्तॄणिदेहिनाम् ॥
सर्वेषामेवशौचाना-मर्थशौचंपरंस्मृतम् ।
योऽर्थेशुचिर्हिसशुचि-र्नमृद्वारिशुचिःशुचिः ॥
क्षान्त्याशुध्यन्तिविद्वांसोदानेनाकार्यकारिणः ।
प्रच्छन्नपापाजप्येन तपसावेदवित्तमाः ॥
मृत्तोयैःशुध्यतेशोध्यं नदीवेगेनशुध्यति ।
रजसास्त्रीमनोदुष्टा संन्यासेनद्विजोत्तमः ॥
अद्भिर्गात्राणिशुध्यन्ति मनःसत्येनशुध्यति ।
विद्यातपोभ्यांभूतात्मा बुद्धिर्ज्ञानेनशुध्यति ॥
एषशौचस्यवःप्रोक्तः शारीरस्यविनिर्णयः ।
नानाविधानांद्रव्याणांशुद्धेःशृणुतनिर्णयम् ११

अ०—ज्ञानं तत्त्वज्ञानं शोकमोहमिथ्याज्ञानादिसम्बद्ध- मालिन्यस्य, तपो—रागद्वेषादिद्वन्द्वजन्यवैषम्यमालिन्यस्य अग्निः क्षेपकःस तप्तसुवर्णादिमलापहारको देहमलापगम-

कस्य, यथौषधमुपयुक्तं रोगं हन्ति तथा शुद्धः सात्त्विकश्चाहारो रजस्तमोजन्यमालिन्यस्य, क्षारादिगुणवती मृद्धस्तवसनादिसम्बद्धमलस्य, शुद्धं मन इन्द्रियादिसम्बद्धस्य, शुद्धं वारि देहादिसम्बद्धमलस्य स्नानादिना, उपाञ्जनं गोमयादिना गृहलेपनं, चन्दनकेशरादिना शरीरलेपनं च तत्तत्सम्बद्धमालिन्यस्य, गमनशीलो वायुः पूतिगन्धादेः, कर्म परिणामान्तरहेतुत्वात्सूर्यः शोषकत्वात्कालश्चावस्थान्तरहेतुत्वादवस्थितमालिन्यस्य वारकः प्रत्यक्षेणैव सर्वैरनुभूयते । सर्वेषामेव शौचानां मध्येऽर्थशौचं, छलकपटादिराहित्येन भावशुद्धिपुरसरो व्यवहारो योऽस्मिन्नर्थे शुचिः स शुचिस्तदपेक्षया च मृद्वारिशुचिरशुचिरेवास्ति । अर्थशौचे पुण्यप्राबल्यात् । क्षान्त्या क्षमया विद्वांसोऽकार्यकारिणः पापाचारा दानेनाप्रसिद्धपापिनो जप्येन वेदवित्तमाश्च तपसा शुध्यन्ति । बाह्यं स्थूलं वस्तु मलमूत्रादिसंसर्गदूषितं शरीरं च मृज्जलाभ्यां शुध्यति। ग्रामादिस्थपतितमलदूषिता नदी जलप्रवाहप्राबल्येन, मनसि संजातव्यभिचारसंकल्पा स्त्री रजःप्रवाहेण शुध्यति। यदि च स संकल्पस्तस्या अनुद्भूतो निवृत्तो वा भवति । उद्भूतसंकल्पा तु रजसाऽपि न शुध्यति । द्विजोत्तमो ब्राह्मणश्च संन्यासेन वैराग्येण त्यागेन सामान्यपापाच्छुद्धो भवति । अद्भिः प्रक्षालितानि शरीराङ्गानि शुध्यन्ति । स्थायिव्यभिचारदोषरहितमनोऽनुकूलाविकल्पितवाग्व्यापारेण मनः शुध्यति । भूतात्मा सूक्ष्मलिङ्गशरीरसम्बद्ध आत्मा वेदाभ्यासेन तपसा च शुध्यति । विपर्ययादिरूपाविद्ययोपलिप्ता विपरीतार्थव्यवसायपरा बुद्धिर्ज्ञानेन तत्त्वज्ञानेन शुध्यति॥

भा०-सर्वापेक्षया ज्ञानं प्रधान्येन शोधकम्। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति कथनात्। तथा नहि ज्ञानेन सदृशं पवित्रमिह विद्यते। अतएव तत्त्वज्ञानस्यैवाविनाभावेन कैवल्यकारणत्वं सर्वविद्वदनुमतमस्ति। मृज्जलादिना शोधनेन सार्द्धं वाचा मनसा च छलादिकं विहाय शुद्धाचरणएकः,शरीरवस्त्रादिना मलिनोऽपि सन् छलादिरहितः शुद्धाचरणो द्वितीयः,दर्शनायैवोपरिष्टाच्छुद्धश्छलकपटादिनीतिचातुर्येण स्वार्थसाधनरतस्तृतीयो महाधमः पापिष्ठः। तृतीयाद्द्वितीय उत्तमः। ते शुद्धाभासाः (हृदयेन यथाक्षुरः। अन्ये च बदराकारा बहिरेव मनोहराः) इत्यादि वद्बकव्रतिनो धर्मध्वजिनः प्रच्छन्ननास्तिकाः प्रच्छन्नराक्षसा अधर्ममूर्त्तयो जनाः सम्प्रति वृद्धिंगता जगति वर्त्तन्ते। अतएव दुःखापत्तयोऽहर्निशंभूमण्डले वर्द्धन्ते।एतद्दर्शयितुमेवार्थमृद्वारिशुचिःशुचिरित्युक्तम्। तत्त्वं विदुषां क्षमया शुद्धिरित्यादिकथनमर्थशौचस्यैव सर्वः प्रपञ्चः। तथा च मनोऽनुकूलेन शुद्धेन बाह्याचरणेन सर्वं क्षमादिकं संगृह्यते। शुद्धाचारान्न कोऽपि धर्मो व्यतिरिच्यते। शावाशौचे सौतकेऽन्यत्र च सर्वत्रैव शारीरमात्मिकं च द्विविधमाशौचं तस्य सर्वस्य ज्ञानादिकमेव शोधकम्। ब्रह्मचर्यरक्षणं धराशयनं क्षारलवणादिरहितशुद्धसात्त्विकाहारसेवनम्। मृदादिना गृहशोधनं विशेषेण च सर्वमनित्यं पश्यतो धर्मेऽविकल्पं मनोनिधानं परं शोधकम्। तेनतेन क्षमादिसाधनेन तस्यतस्य विद्वत्त्वादेः शुद्धौ साक्षात् प्राधान्यमेवावगन्तव्यम्। परम्प-

द्याद्भिः स्नातस्य ग्लानिहीनं मनोऽपि प्रसीदत्येव साक्षा-त्वद्भिः शरीरशुद्धिरेव, प्रसादः शुद्धिश्चानर्थान्तरम् । सर्व-विधा शुद्धिश्च पूर्णो धर्मएव। नहि कोऽपि किमप्यधर्ममा-चरन् बाह्याभ्यन्तरतः सर्वथा शुद्धो भवति । कस्यचिन्मर-णे सम्बन्धिनां ग्लानिः शोको रोदनं दुःखानुभवश्च सर्वं पापं तस्यापशमोपायः शुद्धिः पुण्यं धर्मइति तस्यात्र शा-सनमुचितमेव ॥११०॥

भाषार्थः—( ज्ञानं तपोऽग्निराहारः ) शोक मोह और मिथ्याज्ञानादि सम्बन्धी मलिनता का सर्वोपरि शोधने हटाने वाला ज्ञान है, राग द्वेषादि द्वन्द्वों से होने वाली विषमता रूप मलिनता का शोधक तप, अग्नि का स्वाभाविक गुण तेजी से किसी को फेंकना है इसी से वेद में अग्नि का नाम अज है वह अग्नि तपाये सुवर्णादि के और तप द्वारा शरीर के वा अन्तःकरण के मल को दूर फेंक देता है। जैसे सेवन किया हुआ औषध रोगको हटाता वैसे शुद्ध सात्त्विक आहार भोजन भी रजोगुण तमोगुण सम्बन्धिनी मलिनता को दूर करता है। क्षुधा भी एक स्वाभाविक रोग है और ओषधियों का फल ही अन्न वा आहार है क्षुधारूप रोग का शोधक तो आहार स्पष्ट ही है (मृन्मनोवार्युपाञ्जनम्) रेव मट्टी आदिवस्त्रों वा हाथ आदि का मल छुड़ाती इसी से साबन भी शोधक है क्योंकि साबन में रेव पड़ता ही है, शुद्ध मन इन्द्रियों के दोषों को हटाता, शुद्ध जल शरीरादि सम्बन्धी मल को स्नानादि द्वारा हटाता, मट्टी गोवर से घर को लीपना पोतना वा केशर चन्दनादि से शरीर पर लेपन करना दुर्गन्धादि अशुद्धि को हटाता है ( वायुः कर्मार्ककालौ च ) गमनशील वायु दुर्गन्धादि मलिनता को शोधता, पदार्थों की दशा को बदलता हुआ अशुद्ध को शुद्ध कर देता, हल जोतना आदि क्रिया भी वा सन्ध्योपासनादि कर्म भी शोधक है, सुखाने वाला होने से गीलेपन से सम्बद्ध अशुद्धि का शोधक सूर्य और पदार्थों की अवस्था को बदलता हुआ काल भी शुद्ध करता है ( शुद्धेः कर्तृणि देहिनाम् ) ये ज्ञानादि सब उक्त प्रकार मनुष्यों के शोधक हैं और शुद्धि धर्म है इस से धर्म के साधन ज्ञानादि हैं ( सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् ) सब शुद्धियों में छल कप-

टादि रहित होके अन्तःकरण की शुद्धि पूर्वक सत्य व्यवहार करना रूप अर्थशुद्धि अतिउत्तम है ( योऽर्थे शुचिः स शुचिर्न मृद्वारिशुचिः शुचिः ) जो पुरुष धन व्यवहार में शुद्ध है वही शुद्ध और केवल मट्टी जल से अधिक २ हाथ आदि के मांजने धोने स्नान करने श्वेत वस्त्र पहरने वाला वैसा पवित्र नहीं है (क्षान्त्या शुध्यन्ति विद्वांसः) क्षमा करने सहन शील होने से विद्वान् सदसद्विवेकी लोग शुद्ध होते ( अकार्यकारिणो दानेन ) चोरी हिंसादि द्वारा अन्यों की हानि करने वाले दानरूप परोपकार से ( प्रच्छन्नपापा जप्येन ) गुप्त पापों वाले गुप्त जप करने से अर्थात् एकान्त शुद्धस्थान में बैठ २ कष्ट सह कर प्रहरों तक नित्य जप करने से शुद्ध होते ( तपसा वेदवित्तमाः ) और अधिकता के साथ वेद के तत्त्व को जानने वाले महात्मा लोग अपनी सूक्ष्म दुर्वासनाओं की शुद्धि तप के द्वारा कर सकते हैं ( शोध्यं मृत्तोयैः शुध्यते ) बाहिरी स्थूल पदार्थों पर लगी मल मूत्रादि की स्थूल अशुद्धि मट्टी जल से शुद्ध होती ( नदी वेगेन ) ग्रामादि से मोरी आदि द्वारा मल मूत्रादि पड़ने से दूषित हुई नदी जल प्रवाह के वेग से शुद्ध होती ( मनोदुष्टा स्त्री रजसा ) जिस के मन में अन्य पुरुष से व्यभिचार करने का संकल्प हो कर दब गया वा निवृत्त हो गया ऐसी स्त्री रजस्वला होने से शुद्ध हो जाती है पर जिस के मन में कुकर्म की इच्छा वर्तमान है वह रजस्वला होने पर भी शुद्ध नहीं हो सकती ( द्विजोत्तमः संन्यासेन शुध्यति ) और ब्राह्मण संन्यास नाम पूर्ण वैराग्य से शुद्ध होता है ( अद्भिर्गात्राणि शुध्यन्ति ) जल से धोने द्वारा हाथ पांव आदि शरीराङ्ग शुद्ध होते ( मनः सत्येन शुध्यति ) मन के अनुकूल विकल्प रहित वाणी के सत्य व्यवहार से मन शुद्ध होता अर्थात् असत्य बोलने से मन सर्वोपरि अशुद्ध दूषित हो जाता ( विद्यातपोभ्यां भूतात्मा ) सूक्ष्म लिङ्ग शरीर सहित जीवात्मा वेद को पढ़ने जानने और तप करने द्वारा शुद्ध होता और वेदाभ्यास तथा तप किये विना जीवात्मा अत्यन्त अशुद्ध मलिन रहता है ( बुद्धिर्ज्ञानेन शुध्यति ) बुद्धि ज्ञान के द्वारा शुद्ध होती अर्थात् विपर्ययरूप अविद्या से ग्रस्त विपरीत विषयों का निश्चय करने वाली बुद्धि तत्त्वज्ञान होने से शुद्ध होती है ( शारीरस्य शौचस्यैष विनिर्णयो वः प्रोक्तः ) भृगु जी कहते हैं कि हे श्रोता ऋषिलोगो ! शरीर से सम्बन्ध रखने वाले आत्मादि की शुद्धि का यह उक्तनिर्णय मैंने तुम लोगों के लिये कहा अब ( नानाविधानां द्रव्याणां शुद्धेर्निर्णयं शृणुत ) नाना प्रकार के द्रव्यों की शुद्धि का निर्णय तुम लोग और सुनो ॥

भा०—सब की अपेक्षा ज्ञान ही सर्वोपरि प्रधान शोधक है इसी लिये भगवद्गीता में लिखा है कि—"ज्ञानरूप अग्नि सब दुष्कर्मों की वासनाओं को एक साथ भस्म कर देता है। तथा ज्ञान के समान अन्य कोई पवित्र वस्तु संसार में नहीं है" इसी से जिस के विना जो कभी हो ही नहीं सकता ऐसे तत्त्वज्ञान को ही एक मत होके मोक्ष का कारण सब विद्वान् लोग मानते हैं। एक जल मट्टी आदि के द्वारा शुद्धि करने के साथ शुद्ध सत्य व्यवहार करने वाला, द्वितीय शरीर वस्त्रादि से मलिन रहता हुआ भी शुद्ध व्यवहार करने छल कपट से न वर्त्तने वाला और तृतीय ऊपर से देखने में शरीर वस्त्रादि से दिखावटी शुद्धि [सफाई] रखता हुआ स्वार्थसाधन के लिये छल कपट चालाकी से वर्त्तने वाला इन में पहिला सर्वोत्तम धर्मात्मा द्वितीय मध्यम और तृतीय महानीच अधर्मी है। तृतीय से द्वितीय बहुत उत्तम है। सो ऊपरी शुद्धि सफाई का लिफाफा दिखाने वाले और (हृदयेन यथा क्षुरः। वा—अन्ये च बदराकारा बहिरेव मनोहराः) हृदय से अन्य की हानि के लिये क्षुरा की धार के समान हैं अथवा जैसे वेरिया का फल वेर ऊपर से देखने में अच्छा चिकना और चमकदार होता पर भीतर ऐसी कड़ी वा खरखरी गुठली होती है जिस से दांत भी टूट जांय पर फूटे नहीं ऐसे ही जो मनुष्य बाहर से अच्छे बने ठने बड़े प्रियभाषी—वे ही धर्म के शत्रु अधर्म की मूर्त्ति मनुष्य संसार में सम्प्रति इतने अधिक बढ़े हैं जिन ने दैवी सम्पत्ति के अत्यन्त थोडे मनुष्यादि को सर्वथा ही दबा लिया है। इसीसे भूमण्डल में दिन २ दुःख और विपत्ति बराबर बढ़ती जाती है। केवल ऊपरी दिखावटी शुद्धि मात्र को धर्म से विरुद्ध कहने के लिये ही यहां मनु जी ने (न मृद्वारिशुचिः शुचिः) कहा है। सो यह कथन उक्त प्रकार सर्वथा ही सत्य है क्षमा से विद्वानो की शुद्धि होती इत्यादि सब कथन अर्थ शौच का व्याख्यान है। सो मन के अनुकूल बाहरी शुद्ध आचरण के साथ सब क्षमादि का ग्रहण आजाता है अर्थात् शुद्ध आचरण से भिन्न कोई धर्म नहीं ठहरता। मृतक और सूतक दोनों अशुद्धियों में सर्वत्र ही शरीर सम्बद्ध स्थूल वा अन्तःकरण सम्बद्ध सूक्ष्म दो ही प्रकार की अशुद्धि है उस सब के शोधक ज्ञानादि हैं। ब्रह्मचारी होकर रहना, पृथिवी पर सोना, खार वा लवणादि रहित शुद्ध सात्त्विक भोजन करना चूना मट्टी आदि से घर को शुद्ध करना और विशेष कर सब संसार को अनित्य देखते हुए का धर्म में मन लगाना परम शोधक है यही सब कृत्य गमी आदि में कर्त्तव्य कहा है। उस २ क्षमादि साधन से उस २ विद्वान्‌पन आदि की भीतरी शुद्धि

होने पर उस २ साधन की साक्षात् प्रधानता ही जानो अर्थात् धर्म विषय में क्षमादि न प्रधान और परम्परा से तो जलों द्वारा स्नान किये मनुष्य का मन ग्लानि रहित प्रसन्न होता ही है प्रसन्नता और शुद्धि एक ही है अभिप्रायार्थ में कोई भेद नहीं और क्षमादि द्वारा जानकारी आदि की शुद्धि तथा जलादि से शरीरादि की शुद्धि करना दोनों की शुद्धि मिलकर पूर्ण धर्म हो जाता है। क्योंकि कोई मनुष्य कुछ अधर्म का आचरण करता हुआ बाहर भीतर से शुद्ध नहीं होता और न अशुद्ध मलिन रहता हुआ ठीक धर्माचरण कर सकता है। किसी निकटवर्ती के मरने पर उस के सम्बन्धियों को ग्लानि, शोक होना उन का रोना, दुःख मानना सब पापों के अन्तर्गत है उस ग्लानि आदि को छुड़ाने के लिये जो उपाय है वह शुद्धि, पुण्य वा धर्म है इस प्रकार उस धर्माधर्म की यहां शिक्षा करना उचित ही है ॥ ११० ॥

**तैजसानां मणीनांच सर्वस्याश्ममयस्यच।**
**भस्मनाद्भिर्मृदाचैव शुद्धिरुक्तामनीषिभिः॥**
**निर्लेपंकाञ्चनंभाण्ड-मद्भिरेवविशुध्यति।**
**अब्जमश्ममयंचैव राजतंचानुपस्कृतम्॥**
**अपामग्नेश्चसंयोगा-द्धैमं रौप्यंचनिर्बभौ।**
**तस्मात्तयोःस्वयोन्यैव निर्णेकोगुणवत्तरः॥**
**ताम्रायःकांस्यरैत्यानां त्रपुणःसीसकस्यच।**
**शौचंयथार्हंकर्त्तव्यं क्षाराम्लोदकवारिभिः॥**
**द्रवाणांचैवसर्वेषां शुद्धिरुत्पवनंस्मृतम्॥**
**प्रोक्षणंसंहतानांच दारवाणांचतक्षणम्॥**
**मार्जनंयज्ञपात्राणां पाणिनायज्ञकर्मणि।**
**चमसानांग्रहाणांच शुद्धिःप्रक्षालनेनतु॥**

**चरूणांस्रुक्स्रुवाणांच शुद्धिरुष्णेनवारिणा ।**
**स्फ्यशूर्पशकटानांच मुसलोलूखलस्यच॥११७॥**

भ्र०-यान्यग्निवायुसंयोगेन ध्मायमानानि द्रवीभवन्ति तानि सुवर्णरजतादिद्रव्याणि तैजसानि तन्निर्मितपात्रादीनाम्-मरकतादिमणीनां सर्वस्याश्ममयस्य कुण्डकापट्टादि पात्रस्य च भस्मना शुच्यामृदा वाऽद्भिश्च मनीषिभिः पण्डितैः शुद्धिरुक्ता । यत्राशुद्धमुच्छिष्टं वा वस्तु न लिप्यते तादृशं सौवर्णं पात्रं शुष्कमलिनेन स्पृष्टं केवलाभिरद्भिरेव विशुध्यति। अब्जं शङ्खादिकमश्ममयं विशिष्टस्निग्धपाषाणनिर्मितं यद्रेखादिचित्रक्रियया गुणान्तरापत्तिं न नीतं तादृशं स्निग्धं राजतं पात्रं केवलेन मृद्विहीनजलेनैव शुध्यति । अपामग्नेश्च संयोगात्सुवर्णं रजतं च द्रव्यमुत्पन्नं तस्मात्तयोः स्वकारणाभ्यामेव शोधनमुत्तमम् । ताम्रलोहकांस्यपित्तलधातुजन्यपात्राणां त्रपुणो रङ्गस्य सीसकस्य च पात्रादीनां क्षाराम्लोदकवारिभिर्यथार्हं शौचं कर्त्तव्यम् । येन यस्य मलापगमः सम्भवति तेन तस्य शौचं कर्त्तव्यमिति यथार्हपदार्थः । ताम्ररैत्यव्यतिरिक्तपात्राणां क्षारसहितेन वारिणा ताम्ररैत्ययोस्त्वम्लोदकेनेति । सर्वेषां द्रवाणां पदार्थानामुत्पवनमुत्कर्षेण पवनं शुद्धिः स्मृताऽभिमता । तच्चोत्पवनं क्वचिदपवित्रभागं निस्सार्य प्रक्षेपेण क्वचिदतिपवित्रकुशकर्पूरादिद्रव्यसंसर्गेण क्वचिद्वस्त्रेण पावनं क्वचिच्चाग्नौ विशेषतः प्रतपनादिना सम्भवति । संहतानां स्यूतानां म-

हतां मध्यानामल्पानां च शय्यादिवाससां जलेन यथायो प्रोक्षणं प्रक्षालनं च, दारवाणां दारुजन्यपात्रादीनाममेध्य लग्नभागस्य तक्षणम् । यज्ञकर्मणि यज्ञपात्राणां पाणि पूर्वं मार्जनं मलापगमकर्म कृत्वा पश्चात्प्रक्षालनेन शोधनं कार्यं चमसानां ग्रहाणां च केवलेन प्रक्षालनेनैव शुद्धिः का र्या । चरूणां चरुस्थाल्यादीनां स्रुक्स्रुवाणां च स्फ्यशूर्पश कटानां च मुसलोलूखलस्य चोष्णेन वारिणा शुद्धिः कार्या

भा०—तत्तद्वस्तुलग्नामेध्यापगमो यैर्यैरुपायैः सम्भवति ते चात्रोपायाः साधुतया तत्त्वदर्शिभिरवधारिताएवोच्यन्ते तत्र च विवादमकृत्वाऽनुभवेन शास्त्रस्य सत्यत्वमवगन्त व्यम् । कुत्रचित्क्रियमाणेऽपि तथैव फलं न दृश्येत तदा प्याप्तवाक्यानां धर्मशास्त्राणामविश्वासो नैव कार्यः । यतः स्वस्मिन् स्वस्य कर्मणि साधनेषु वा वैगुण्यं सम्भवति । यथा ऽन्यस्य भ्रान्तिसम्भवस्तथा स्वस्यापि तत्र विशेषहेतुमन्त रेण न केनापि शास्त्रस्यैवाविश्वासः कर्त्तुं युक्तोऽपितु शा स्त्रकृदपेक्षया स्वबुद्धेरल्पत्वात्स्वस्यैव दोषः सम्भावनीयः तस्माद्धर्मतत्त्वविज्ञानाय सदैव शास्त्रमन्वीक्षणीयं या च तर्कादिसहिता मतिः शास्त्रखण्डनाय प्रवर्त्यते सैव शास्त्रो क्तविषयव्यवस्थापनायोद्योज्या । तस्माद्यथोक्तामेव शुद्धि मन्वीक्षणेन सम्यग्ज्ञात्वा तस्यतस्य पदार्थस्य तथैव शु द्धिः कर्त्तव्या तेन च धर्मो वर्धते । प्रायेण सर्वएव पदा र्था लोकेष्वग्नीषोमीया दृश्यन्ते । सर्वं च वस्तु यत उत्पद्यते तदेव स्वकारणम्प्राप्य शुद्धं जायते । यथा पार्थिवमोषधि

फलं गोधूमाद्यन्नं मनुष्यभक्षितमशुद्धं मलं सत्स्वकारणपृथिवीरूपं सच्छुद्धं जायत एवं क्षारभस्माद्याग्नेयेनाबादिना सौम्येन वा कारणेन सर्वकार्यवस्तूनाममेध्यानां शुद्धिः ११०

भावार्थः—( तैजसानां मणीनां च सर्वस्याश्ममयस्य च ) जो अग्नि में धर के अधिक धोंकने से पिघल जाते हैं वे सुवर्ण चान्दी आदि द्रव्य तैजस कहाते हैं उन सुवर्णादि के पात्रों, मरकतादि नामक मणियों और पत्थर से बने सब कूंडी पट्टा आदि वर्त्तनों की ( शुद्धिर्भस्मनाद्भिर्मृदा चैव मनीषिभिरुक्ता ) शुद्धि ब्रह्मर्षि विद्वानों ने राख मट्टी और जल के द्वारा मांजने धोने से कही है अर्थात् किन्हीं की मट्टी और जल दो से होती है (निर्लेपं काञ्चनं भाण्डम्) जिस में जूठन वा अशुद्धि प्रसिद्ध में न लगी दीखती हो किन्तु सूखे अशुद्ध वस्तु से स्पर्शमात्र हो गया हो ऐसा सुवर्ण का पात्र ( अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ) अब्ज नाम शङ्खादि, चिकने सिंहमर्मर आदि बहुमूल्य पत्थर के उत्तम पात्र जिन में मलिनता भीतर घुसती नहीं और जिन में किसी प्रकार की रेखा [नकाशी] न की गयी हो ऐसे चांदी के पात्र ( अद्भिरेव विशुध्यति ) केवल जल से धोने पर शुद्ध हो जाते हैं ( अपामग्नेश्च संयोगाद्धैमं रौप्यं च निर्बभौ) सुवर्ण और चांदी दोनों अग्नि तथा जल के संयोग से उत्पन्न हुए हैं इसी कारण उन का रूप दर्शनीय उत्तम है और इसी से अग्नि में धोंके जाने पर पिघलते भी हैं। उन में से सुवर्ण में अग्नि प्रधान और जल गौण है तथा चांदी में जल प्रधान तथा अग्नि गौण है इसी कारण अग्नि कासा चमकीला रंग सुवर्ण में और शुद्ध जल से मिलता हुआ रूप चान्दी में है ( तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः) तिस से उन दोनों की शुद्ध अग्नि में तपा के जल से धोना अपने दोनों कारणों से ही करना उत्तम है [ प्रत्येक पदार्थ अपने कारण में पहुंच कर ठीक शुद्ध दशा में आजाता है। इसी से अन्यत्र हुए विषमता रूप रोग जन्मस्थान में पहुंचने पर छूट जाते वह शुद्ध ठीक समदशा में आ जाता है ] (ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च) तामा, लोहा, कांसा, रांगा, और सीसा के पात्रादि की ( क्षाराम्लोदकवारिभिर्यथार्हं शौचं कर्त्तव्यम् ) खारे वस्तु से मिले जल से, खटाई मिले जल वा केवल जल से यथायोग्य शुद्धि करनी चाहिये अर्थात् जिस से जिस की मलिनता दूर होनी सम्भव हो उस से

उस की शुद्धि करे जैसे तामे और पीतल के पात्रों की खट्टे जल से और भस्मे की खारी जल से वा केवल जल से शुद्धि करे ( सर्वेषां द्रवाणां चैव शुद्धिरुत्पवनं स्मृतम् ) सब गीले ढरकने योग्य घी तेलादि पदार्थों की शुद्धि उत्कृष्टता से पवित्र करना ऋषिलोगों ने मानी है सो उत्कृष्ट शुद्धि कहीं अशुद्ध भाग को निकाल देने से, कहीं अति पवित्र कुश और कपूर आदि पदार्थों के संयोग से, कहीं वस्त्र द्वारा छान लेने से और कहीं विशेष कर अग्नि में तपाने खौलाने से होती है ( संहतानां च प्रोक्षणम् ) बहुत टुकड़े मिलाकर बनाये बिछौना तम्बू आदि की शुद्धि सींच देने वा छोटे हों तो पछार के धो डालने से होती ( दारवाणां च तक्षणम् ) और काष्ठ लकड़ी के पात्रों की शुद्धि अशुद्धभाग के छील डालने से ( यज्ञकर्मणि यज्ञपात्राणां पाणिना मार्जनम् ) यज्ञ कर्म होते समय यज्ञपात्रों को हाथ से झाड़ पोंछ शुद्ध कर धो लेने से ( चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन तु) घी आदि को भर लेने के चमसा और चिमटा वा संड़सी आदि की शुद्धि केवल प्रक्षालन धोने से करनी चाहिये (चरूणां स्रुक्स्रुवाणां च शुद्धिरुष्णेन वारिणा ) चरुस्थाली आदि, स्रुच्, स्रुव, ( स्फ्यशूर्पशकटानां च मुसलोलूखलस्य च ) काष्ठ का खड्ग, सूप, गाड़ी,—ठेला, मूसल और उलूखल इन सब यज्ञ सम्बन्धी वस्तुओं की शुद्धि गर्म जल से होनी चाहिये ॥

भा०—उस २ वस्तु में लगी अपवित्रता जिन २ उपायों से निवृत्त हो सकती वे उपाय तत्त्वदर्शियों के निश्चय किये यहां कहे गये हैं। उस में विवाद न करके लिखित रीतियों को कर २ देखे तो शास्त्र की सत्यता ठीक ज्ञात होगी। कहीं करने पर भी लिखे अनुसार फल हुआ न दीखे तो भी धर्मशास्त्रकार आप्त वाक्यों का अविश्वास नहीं करना चाहिये क्योंकि अपने में अपने काम में वा अपने साधनों में न्यूनता हो सकती है, जिस से वह ठीक हुआ ही न हो तो शास्त्र को दोष देना पाप होगा। जैसे अन्य के लेख वा उपदेश में भ्रान्ति हो सकती है वैसे अपने में भी दोष हो सकते हैं। वहां विशेष कारण के बिना किसी को शास्त्र का ही अविश्वास नहीं कर लेना चाहिये किन्तु शास्त्रकार की अपेक्षा अपनी बुद्धि अल्प होने से अपना ही दोष होना सम्भव माने। इस कारण धर्म का तत्त्व जानने के लिये शास्त्र का सदा ही आन्दोलन करना उचित है और जो तर्कादि सहित बुद्धि शास्त्रीय विचार का निरादर करने में लगायी जाती वही शास्त्रोक्त विषय की व्यवस्था करने सत्य ठहराने में लगानी चा-

लिये। तिस से आन्दोलन द्वारा कहे अनुसार शुद्धि को ठीक जान कर उस २ पदार्थ की वैसी ही शुद्धि करे इस से धर्म बढ़ता है। प्रायः संसार के सभी पदार्थ अग्नि और सोम दो तत्वों की अधिकता वाले दीखते हैं। और सभी वस्तु जिस से उत्पन्न होता उसी अपने कारण को पाकर शुद्ध होता है। जैसे पार्थिव ओषधियों का फल गेंहूं आदि अन्न मनुष्य के खाने से अशुद्ध मलरूप हुआ अपने कारण पृथिवी में मिल कर शुद्ध हो जाता है। इसी प्रकार खार भस्मादि आग्नेय और जलादि सौम्य दोनों प्रकार के उन २ वस्तुओं के कारण पदार्थों से सब अशुद्ध हुए कार्य पदार्थों की शुद्धि होती है ॥ ११६ ॥

**अद्भिस्तुप्रोक्षणंशौचं बहूनांधान्यवाससाम्।**
**प्रक्षालनेनत्वल्पाना-मद्भिःशौचंविधीयते ॥**

[ अयहकृतशौचानांतु वायसीशुद्धिरिष्यते।
पर्युक्षणाद्धूपनाद्वा मलिनामतिधावनात् ॥ ]

**चैलवच्चचर्मणांशुद्धि-र्वैदलानांतथैवच।**
**शाकमूलफलानांच धान्यवच्छुद्धिरिष्यते ॥**
**कौशेयाविकयोरूषैः कुतपानामरिष्टकैः।**
**श्रीफलैरंशुपट्टानां क्षौमाणांगौरसर्षपैः ॥**
**क्षौमवच्छङ्खशृङ्गाणा-मस्थिदन्तमयस्यच।**
**शुद्धिर्विजानताकार्या गोमूत्रेणोदकेनवा ॥**
**प्रोक्षणात्तृणकाष्ठंच पलालंचैवशुध्यति।**
**मार्जनोपाञ्जनैर्वेश्म पुनःपाकेनमृन्मयम् ॥**
**मद्यैर्मूत्रैःपुरीषैर्वा ष्ठीवनैःपूयशोणितैः।**
**संस्पृष्टंनैवशुध्येत पुनःपाकेनमृन्मयम् ॥**

संमार्जनोपाञ्जनेन सेकेनोल्लेखनेनच ।
गवांचपरिवासेन भूमिःशुध्यतिपञ्चभिः ॥
पक्षिजग्धंगवाघ्रात-मवधूतमवक्षुतम् ।
दूषितंकेशकीटैश्च मृत्प्रक्षेपेणशुध्यति ॥
यावन्नापैत्यमेध्याक्ता-द्गन्धोलेपश्चतत्कृतः ।
तावन्मृद्वारिचादेयं सर्वासुद्रव्यशुद्धिषु ॥१२६॥

अ०—बहूनां धान्यवाससामद्भिः प्रोक्षणं सेचनमल्पानां त्वद्भिः प्रक्षालनेन शौचं विधीयते। अस्याग्र एकं पद्यं पश्चात् क्षिप्तमुपलभ्यते तस्यार्थः प्राक्तेऽवलोक्यः। चर्मनिर्मितपदार्थानां वंशवेत्रादिनिर्मितवैदलानां च चैलवद् बहूनां प्रोक्षणमल्पानां च प्रक्षालनम्। शाकमूलफलानामल्पानां बहूनां चोक्तधान्यवच्छुद्धिरिष्यते। कौशेयाविकवाससामूषैः क्षारमृत्तिकाभिः कुतपानां पर्वतीयकम्बलानामासनानामरिष्टफलैरंशुपट्टानां वल्कलविशेषनिर्मितानां वसनानां श्रीफलैर्विल्वफलैः क्षौमाणामतसीसूत्रनिर्मितवाससां पिष्टैर्गौरसर्षपैः शुद्धिरिष्टा। शङ्खानां शृङ्गनिर्मितवस्तूनामस्थिदन्तमयस्य च वस्तुनः क्षौमवद्गौरसर्षपकल्कमिश्रितगोमूत्रेण तदभावे तन्मिश्रितजलेन वा विजानता शुद्धिः कार्या तृणं काष्ठं पलालं चैवालिप्तं प्रोक्षणात्सेचनादेव शुध्यति। लिप्तकाष्ठस्य तक्षणं लिप्ततृणपलालयोस्तु परित्यागएव। मार्जन्या मार्जनेनोपाञ्जनेन लेपनादिना च वेश्म शुध्यति। मृ-

